# विष्णुसंहिता।

मूल संस्कृत एवं भाषानुवाद सहित।

कलकत्ता।

३८।२ भवानीचरण दत्त ष्ट्रीट बङ्गवासी इलेक्ट्रो-मेशीन प्रेसमें

श्रीनटवर चक्रवर्त्ती द्वारा मुद्रित

और प्रकाशित।

सम्वत् १९६४।

मूल्य २) रुपये।

# विष्णुसंहिता।

मूल संस्कृत एवं भाषानुवाद सहित।

कलकत्ता।

३८।२ भवानीचरण दत्त ष्ट्रीट, बङ्गवासी इलेक्ट्रो-मेशीन प्रेसमें

श्रीनटवर चक्रवर्त्ती द्वारा मुद्रित

और प्रकाशित।

सम्बत् १९६४।

मूल्य २) रुपया।

# विष्णुसंहिता।

## प्रथमोऽध्यायः।

ब्रह्मरात्र्यां व्यतीतायां प्रबुद्धे पद्मसम्भवे।
विष्णुः सिसृक्षुर्भूतानि ज्ञात्वा भूमिं जलानुगाम्॥
जलक्रीडारुचि शुभं कल्पादिषु यथा पुरा।
वाराहमास्थितो रूपमुज्जहार वसुन्धराम्॥ २
वेदपादो यूपदंष्ट्रः क्रतुदन्तश्चितीमुखः।
अग्निजिह्वो दर्भरोमा ब्रह्मशीर्षो महातपाः॥ ३
अहोरात्रेक्षणो दिव्यो वेदाङ्गश्रुतिभूषणः।
आज्यनासः स्रुवतुण्डः सामघोषमहास्वनः॥ ४
धर्म्मसत्यमयः श्रीमान् क्रमविक्रमसत्कृतः।
प्रायश्चित्तमयो वीरः पशुजानुर्महाकृतिः॥ ५
उद्गात्रन्त्रो होमलिङ्गो बीजौषधिमहाफलः।
वेद्यन्तरात्मा मन्त्रस्फिग्विकृतः सोमशोणितः॥ ६
वेदिस्कन्धो हविर्गन्धो हव्यकव्यादिवेगवान्।
प्राग्वंशकायो द्युतिमान् नानादीक्षाभिरन्वितः॥ ७
दक्षिणाहृदयो योगी महासत्त्रमयो महान्।
उपाकर्म्मोष्ठरुचिरः प्रवर्ग्यावर्त्तभूषणः॥ ८
नानाच्छन्दोगतिपथो गुह्योपनिषदासनः।
छायापत्नीसहायोऽसौ मणिशृङ्ग इवोच्छ्रितः॥ ९
महीं सागरपर्य्यन्तां सशैलवनकाननाम्।
एकार्णवजलभ्रष्टामेकार्णवगतः प्रभुः॥ १०
दंष्ट्राग्रेण समुद्धृत्य लोकानां हितकाम्यया।
आदिदेवो महायोगी चकार जगतीं पुनः॥ ११
एवं यज्ञवराहेण भूत्वा भूतहितार्थिना।
उद्धृता पृथिवी सर्व्वा रसातलगता पुरा॥ १२
उद्धृत्य निश्चले स्थाने स्थापिता च तथा स्वके।
यथास्थानं विभज्यापस्तदा मधुसूदनः॥ १३
सामुद्राश्च समुद्रेषु नादेयाश्च नदीषु च।
पल्वलेषु च पाल्वल्यः सरःसु च सरोवराः॥ १४
पातालसप्तकं चक्रे लोकानां सप्तकं तथा।
द्वीपानामुदधीनाञ्च स्थानानि विविधानि च॥ १५
स्थानपालाँल्लोकपालान्नदीशैलवनस्पतीन्।
ऋषींश्च सप्त धर्म्मज्ञान् देवान् साङ्गान् सुरासुरान्
पिशाचोरगगन्धर्व्व-यक्षराक्षसमानुषान्।
पशुपक्षिमृगाद्यांश्च भूतग्रामं चतुर्व्विधम्।
मेघेन्द्रचापशम्पाद्यान् यज्ञांश्च विविधांस्तथा॥ १७
एवं वराहो भगवान् कृत्वेदं सचराचरम्।
जगाम्नाम लोकानामविज्ञातां सदा गतिम्॥ १८
अविज्ञातां गतिं याते देवदेवे जनार्द्दने।
वसुधा चिन्तयामास का धृतिर्मे भविष्यति॥ १९
पृच्छामि कश्यपं गत्वा स मे वक्ष्यत्यसंशयम्।
मदीयां वहते चिन्तां नित्यमेव महामुनिः॥ २०
एवं सा निश्चयं कृत्वा देवी स्त्रीरूपधारिणी।
जगाम कश्यपं द्रष्टुं दृष्टवांस्तां च कश्यपः॥ २१
नीलपङ्कजपत्राक्षीं शारदेन्दुनिभाननाम्।
अलिसङ्घालकां शुभ्रां बन्धुजीवाधरां शुभाम्॥ २२
सुभ्रूं सुशुक्लदशनां चारुनासां नतभ्रुवम्।
कम्बुकण्ठीं संहतोरुं पीनोरुजघनस्थलीम्॥ २३
विरेजतुः स्तनौ यस्याः समौ पीनौ निरन्तरौ।
शक्रेभकुम्भसङ्काशौ शातकुम्भसमद्युती॥ २४
बालकोमलौ बाहू करौ किशलयोपमौ।
रक्तोत्पलनिभावङ्घ्री गूढे श्लिष्टे च जानुनी॥ २५
जङ्घे विरोमे सुभगे पद्मावर्त्तमनोरमे।
जघनञ्च घनं मध्यं यथा वेदिर्व्विधिः श्रियोः॥ २६

ायुता नक्षत्राक्ष्या रूपं सर्व्वमनोहरम् ।
ताभ्यां वीक्षितैर्नित्यं नीलोत्पलयुता दिशः ॥ २७
ताभ्यां प्रभया देव्यां तथा वितिमिरा दिशः ।
शुक्लवसनां रत्नोत्तमविभूषिताम् ॥ २८
ासैर्वसुमतीं सपद्मामिव पद्मिनीम् ।
पयौवनसम्पन्नां विनीतवदुपस्थिताम् ।
तीमुपागतां दृष्ट्वा पूजयामास कश्यपः ॥ २९
ाच तां वरारोहे विज्ञातं हृद्गतं मया ।
तत्र विश्वात्मानं गच्छ देवि जनार्दनम् ।
स ते वक्ष्यत्यशेषेण भाविनी ते यथा स्थितिः ॥ ३०
ीरोदे वसतिस्तस्य मया ज्ञाता शुभानने ।
ानयोगेन चार्व्वङ्गि तत्र यानं तत्प्रसादतः ॥ ३१
एवमुक्ता समभ्यर्च्य कश्यपं वसुधा ततः ।
ययौ केशवं द्रष्टुं क्षीरोदमथ सागरम् ॥ ३२
ददर्शाम्भसनिधिं चन्द्ररश्मिमनोहरम् ।
पवनक्षोभसञ्जात-वीचीशतसमाकुलम् ॥ ३३
मवच्छ्रसङ्काशं भूमण्डलमिवापरम् ।
ोहस्तैर्ग्रैवलितैराक्रमानमिव स्थितिम् ॥ ३४
ैव शुभ्रतां चन्द्रे विदधानमिवानिशम् ।
तरस्येन हरिणा विगताशेषकल्मषम् ।
तात् तस्मात् तु विभ्रन्तं सुशुभ्रां तनुमूर्च्छिताम् ॥ ३५
रं खगमागम्यमधोभुवनवर्त्तिनम् ।
नीलकण्ठाराढ्यं विपरीतमिवाम्बरम् ॥ ३६
ावलीसमुद्भूत-वनमाल्यसमाचितम् ।
लोकमिव शेषाहेर्व्विस्तीर्णं तमतीव हि ॥ ३७
दृष्ट्वा तत्र मध्यस्थं ददृशे केशवालयम् ।
नेद्धं सपरीमाणमनिद्धं सर्द्धिसंयुतम् ॥ ३८
पर्य्यङ्कगं तस्मिन् ददर्श मधुसूदनम् ।
ाहिफणरत्नांशु-दुर्व्विभाव्यमुखाम्बुजम् ॥ ३९
ाङ्कशतसङ्काशं सूर्य्यायुतसमप्रभम् ।
वाससमच्छाभं सर्व्वरत्नविभूषितम् ॥ ४०
टेनार्कवर्णेन कुण्डलाभ्यां विराजितम् ।
मानाङ्घ्रियुगं लक्ष्म्या करतलैः शुभैः ।
रिधारिभिः शस्त्रैः सेव्यमानं समन्ततः ॥ ४१

तं दृष्ट्वा पुण्डरीकाक्षं ववन्दे मधुसूदनम् ।
जानुभ्यामवनीं गत्वा विज्ञापयति चाप्यथ ॥ ४२
उद्धृताहं त्वया देव रसातलतलं गता ।
स्वे स्थाने स्थापिता विष्णो लोकानां हितकाम्यया ॥ ४३
तत्राधुना मे देवेश का धृतिर्व्वै भविष्यति ।
एवमुक्तस्तदा देव्या देवो वचनमब्रवीत् ॥ ४४
वर्णाश्रमाचाररताः शास्त्रैकतत्परायणाः ।
त्वां धरे धारयिष्यन्ति तेषां त्वद्भार आहितः ॥ ४५
एवमुक्ता वसुमती देवदेवमभाषत ।
वर्णानामाश्रमाणाञ्च धर्म्मान् वद सनातनान् ।
त्वत्तोऽहं श्रोतुमिच्छामि त्वं हि मे परमा गतिः ॥ ४६
नमस्ते देवदेवेश देवारिबलसूदन ।
नारायण जगन्नाथ शङ्खचक्रगदाधर ॥ ४७
पद्मनाभ हृषीकेश महाबलपराक्रम ।
अतीन्द्रिय सुदुष्पार देव शार्ङ्गधनुर्द्धर ॥ ४८
वराह भीम गोविन्द पुराण पुरुषोत्तम ।
हिरण्यकेश विश्वाद्य यज्ञमूर्त्ते निरञ्जन ॥ ४९
क्षेत्र क्षेत्रज्ञ लोकेश सलिलान्तरशायक ।
मन्त्र मन्त्रवहाचिन्त्य वेदवेदाङ्गविग्रह ॥ ५०
जगतोऽस्य समस्तस्य सृष्टिसंहारकारक ।
सर्व्वधर्म्मज्ञ धर्म्माङ्ग धर्म्मयोने वरप्रद ॥ ५१
विष्वक्सेनाच्युत व्योम मधुकैटभसूदन ।
इच्छतां हंह्याश्रेय सर्व्वं सर्व्वाभयप्रद ॥ ५२
वरेण्यानघ जीमूतनाथ निर्व्वाणकारक ।
आप्यायन अपांस्थान चैतन्याकार निष्क्रिय ॥ ५३
समग्रीर्याध्वरगुरो पुराण पुरुषोत्तम ।
भूताधार सुखाध्यक्ष भक्तवत्सल पावन ॥ ५४
त्वं गतिः सर्व्वदेवानां त्वं गतिर्ब्रह्मवादिनाम् ।
तथा विदितवेदानां गतिस्त्वं पुरुषोत्तम ॥ ५५
प्रपन्नास्मि जगन्नाथ ध्रुवं वाचस्पतिं प्रभुम् ।
सुब्रह्मण्यमनाधृष्टं वसुखेलं वसुप्रदम् ॥ ५६
महायोगबलोपेतं पृश्निगर्भं छन्दाधिपम् ।
वासुदेवं महात्मानं पुण्डरीकाक्षमच्युतम् ॥ ५७
सुरासुरगुरुं देवं विभुं भूतमहेश्वरम् ।

एकवार्षं चतुर्बाहुं जगत्कारणकारणम् ॥ ५८
ब्रूहि मे भगवन् धर्मांश्चातुर्वर्ण्यस्य शाश्वतान् ।
आश्रमाचारसंयुक्तान् सरहस्यान् ससंग्रहान् ॥ ५९
एवमुक्तस्तु देवेशः पुनः क्षौणीमभाषत ।
शृणु देवि धरे धर्मांश्चातुर्वर्ण्यस्य शाश्वतान् ।
आश्रमाचारसंयुक्तान् सरहस्यान् ससंग्रहान् ॥ ६०
ये तु त्वां धारयिष्यन्ति सन्तस्ते वा परायणान् ।
विशल्या भव वामोरु काश्यपेऽस्मिन् वरासने ॥ ६१
सुखासीना निबोध त्वं धर्मानिगदतो मम ।
शुश्रुवे वैष्णवान् धर्मान् सुखासीना धरा तदा ॥ ६२
इति वैष्णवे धर्मशास्त्रे प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ।

ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चेति वर्णाश्चत्वारः ॥ १ ॥ तेषामाद्या द्विजातयस्त्रयः ॥ २ ॥ तेषां निषेकाद्यः श्मशानान्तो मन्त्रवत्क्रियासमूहः ॥ ३ ॥ तेषाञ्च धर्माः—ब्राह्मणस्याध्यापनम्; क्षत्रियस्य शस्त्रनित्यता, वैश्यस्य पशुपालनम्; शूद्रस्य द्विजातिशुश्रूषा; द्विजानां यजनाध्ययने ॥ ४ ॥

अथैतेषां वृत्तयः—ब्राह्मणस्य याजनप्रतिग्रहौ; क्षत्रियस्य क्षितित्राणम्, कृषिगोरक्षवाणिज्यकुसीद-योनिपोषणानि वैश्यस्य; शूद्रस्य सर्वशिल्पानि ॥ ५ ॥ आपद्यनन्तरा वृत्तिः ॥ ६ ॥

क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः ।
अहिंसा गुरुशुश्रूषा तीर्थानुसरणं दया ॥ ७
आर्जवं लोभशून्यत्वं देवब्राह्मणपूजनम् ।
अनभ्यसूया च तथा धर्मः सामान्य उच्यते ॥ ८
इति वैष्णवे धर्मशास्त्रे द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ।

अथ राजधर्माः ॥ १ ॥ प्रजापरिपालनम्, वर्णाश्रमाणां स्वे स्वे धर्मे अवस्थापनम् ॥ २ ॥ राजा च जाङ्गलं पशव्यं शस्योपेतं देशमाश्रयेत् वैश्यशूद्र-

प्रायञ्च ॥ ३ ॥ तत्र धन्वमहीवारिवृक्षगिरि
ग्राममन्यतमं दुर्गमाश्रयेत ॥ ४ ॥ तत्र स्वस्थ
धिपान् कुर्य्यात् । दशाध्यक्षान् । शताध्य
देशाध्यक्षांश्च ॥ ५ ॥ ग्रामदोषाणां ग्रामा
परीहारं कुर्य्यात् ॥ ६ ॥ अशक्तो दशग्रामाध्य
निवेदयेत् ॥ ७ ॥ सोऽप्यशक्तः शताध्यक्ष
सोऽप्यशक्तो देशाध्यक्षाय । देशाध्यक्षोऽपि
त्मना दोषमुच्छिन्द्यात् ॥ ८ ॥ आकरशुल्कतर
वनेष्वाप्तान् नियुञ्जीत । धर्म्मिष्ठान् धर्मकार्य
निपुणानर्थकार्य्येषु । शूरान् संग्रामकर्मसु । उ
ग्रेषु । षण्ढान् स्त्रीषु ॥ ९ ॥ प्रजाभ्यो ब
संवत्सरेण धान्यतः षष्ठमंशमादद्यात् । सर्व
भ्यश्च ॥ १० ॥ द्विकं शतं पशुहिरण्येभ्यो
भ्यश्च ॥ ११ ॥ मांसमधुघृतौषधिगन्ध-पुष्पमूल
रसदारुपत्राजिनमृद्भाण्डाश्मभाण्डवैदलेभ्यः
भागम् ॥ १२ ॥ ब्राह्मणेभ्यः करादानं न कुर्
ते हि राज्ञो धर्मकरदाः ॥ १३ ॥ राजा
प्रजाभ्यः सुकृतदुष्कृतषष्ठांशभाक् ॥ १४ ॥ स्व
पण्याच्च शुल्कांशं दशममादद्यात्, परदेशपण्य
विंशतितमम् ॥ १५ ॥ शुल्कस्थानमपक्रामन् स
पहारमाप्नुयात् ॥ १६ ॥ शिल्पिनः कर्मजीवि
शूद्राश्च मासेनैकं राज्ञः कर्म कुर्य्युः ॥ १
स्वाम्यमात्यदुर्गकोशदण्डराष्ट्रमित्राणि प्रकृतयः ॥
तद्‌घातकांश्च हन्यात् ॥ १९ ॥ स्वराष्ट्रपरराष्ट्र
चारचक्षुः स्यात् ॥ २० ॥ साधूनां पूजनं कुर्य्या
२१ ॥ दुष्टांश्च हन्यात् ॥ २२ ॥ शत्रुमित्रोदासी
मध्यमेषु साममेददानदण्डान् यथार्हं यथाका
प्रयुञ्जीत ॥ २३ ॥ सन्धिविग्रहयानासनसंश्र
द्वैधीभावांश्च यथाकालमाश्रयेत् ॥ २४ ॥ चैत्रे मा
शीर्षे वा यात्रां यायात् । परस्य व्यसने वा ॥ २
परदेशावाप्तौ तद्देशधर्मान् नोच्छिन्द्यात् ॥ २
परेणाभियुक्तश्च सर्वात्मना स्वं राष्ट्रं गोपायेत् ॥ २
नास्ति राज्ञां समरे तनुत्यागसदृशो धर्मः ॥ २८
गोब्राह्मणनृपतिमित्रधनदारजीवितरक्षणाद्ये हत

भाजः। सर्वाम्बुकरखण्डे च ॥ २९ ॥ राजा ष्ट्रावाप्तौ तु तत्र तत्कुलीनमभिषिञ्चेत् ॥ ३० ॥ न राजकुलमुच्छिन्द्यात् अन्यत्राकुलीनराजकुलात् ॥ ३१ ॥ द्यस्त्रीपानेष्वभिरतिं न कुर्य्यात् ॥ ३२ ॥ व्यवहाराणि नोच्छिन्द्यात् ॥ ३३ ॥ नापात्रवर्षी त् ॥ ३४ ॥ आकरेभ्यः सर्व्वमादद्यात् ॥ ३५ ॥ निधिं लब्ध्वा तदर्द्धं ब्राह्मणेभ्यो दद्यात्, द्वितीयमर्द्धं कोषे प्रवेशयेत् ॥ ३६ ॥ निधिं ब्राह्मणो लब्ध्वा सर्व्वमादद्यात् ॥ ३७ ॥ क्षत्रियश्चतुर्थमंशं राज्ञे दद्यात् चतुर्थमंशं ब्राह्मणेभ्योऽर्द्धमादद्यात् ॥ ३८ ॥ वैश्यश्चतुर्थमंशं राज्ञे दद्यात् ब्राह्मणेभ्योऽर्द्धमंश- द्यात् ॥ ३९ ॥ शूद्रश्चावाप्तं द्वादशधा विभज्य ंशान् राज्ञे दद्यात् पञ्चांशान् ब्राह्मणेभ्योऽ- मादद्यात् ॥ ४० ॥ अनिवेदितविज्ञातस्य सर्व्व- हरेत् ॥ ४१ ॥ स्वनिहिताद्राज्ञे ब्राह्मणवर्ज्जं द्वादशमंशं दद्युः ॥ ४२ ॥ परनिहितं स्वनिहित- मिति ब्रुवंस्तत्समं दण्डमाप्नुयात् ॥ ४३ ॥ बाला- थस्त्रीधनानि च राजा परिपालयेत् ॥ ४४ ॥ हृतं धनमवाप्य सर्व्वमेव सर्व्ववर्णेभ्यो दद्यात् ॥ ॥ अनवाप्य च स्वकोशादेव दद्यात् ॥ ४६ ॥ नित्यस्वस्त्ययनैर्दैवोपघातान् प्रशमयेत् ॥ ४७ ॥ पर- तोपघातांश्च शस्त्रनिश्चयतया ॥ ४८ ॥ वेदेतिहास- शास्त्रार्थकुशलं कुलीनमव्यङ्गं तपस्विनं पुरो- हितञ्च वरयेत्। शुचीनलुब्धानवहितान्शक्ति- मतः सर्व्वार्थेषु च सहायान् ॥ ४९ ॥ स्वयमेव हारान् पश्येद्विद्वद्भिर्ब्राह्मणैः सार्द्धम् ॥ ५० ॥ व्यव- हारदर्शने ब्राह्मणं वा नियुञ्ज्यात् ॥ ५१ ॥ जन्म- भवतोपेताश्च राज्ञा सभासदः कार्य्याः रिपौ मित्रे च समाः कामक्रोधभयलोभादिभिः कार्य्यार्थि- नामहार्य्याः ॥ ५२ ॥ राजा च सर्व्वकार्य्येषु सां- वत्सराधीनः स्यात् ॥ ५३ ॥ देवब्राह्मणान् सतत- पूजयेत् ॥ ५४ ॥ वृद्धसेवी भवेत्। यज्ञयाजी ॥ ५५ ॥ न चास्य विषये ब्राह्मणः क्षुधार्त्तो- ऽवसीदेत्। न चान्योऽपि सत्कर्म्मनिरतः ॥ ५६ ॥ ब्राह्मणेभ्यश्च भुवं प्रतिपादयेत् ॥ ५७ ॥ तेषां येषां च प्रतिपादयेत् स्ववंश्यानन्तरप्रमाणं दान- च्छेदोपवर्णनञ्च पटे ताम्रपट्टे वा लिखितं स्वमुद्रा- ङ्कितञ्चागामिनृपविज्ञापनार्थं दद्यात् ॥ ५८ ॥ पर- दत्ताञ्च भुवं नापहरेत् ॥ ५९ ॥ ब्राह्मणेभ्यः सर्व्व- दायान् प्रयच्छेत् ॥ ६० ॥ सर्व्वतश्चात्मानं गोपा- येत् ॥ ६१ ॥ सुदर्शनश्च स्यात्। विषघ्नागदमन्त्र- धारी च। नापरीक्षितमुपयुञ्ज्यात् ॥ ६२ ॥ स्मित- पूर्व्वाभिभाषी स्यात् ॥ ६३ ॥ वध्येष्वपि न भ्रुकुटी- माचरेत् ॥ ६४ ॥ अपराधानुरूपञ्च दण्डं दण्ड्येषु दापयेत् ॥ ६५ ॥ सम्यग् दण्डप्रणयनं कुर्य्यात् ॥ ६६ ॥ द्वितीयमपराधं न कस्यचित् क्षमेत स्वधर्म्ममपालयन् नादण्ड्यो नामास्ति राज्ञः।

यत्र श्यामो लोहिताक्षो दण्डश्चरति निर्भयः।
प्रजास्तत्र विवर्द्धन्ते नेता चेत् साधु पश्यति ॥ ६७
स्वराष्ट्रे न्यायवृत्तः स्याद्भृशदण्डश्च शत्रुषु।
सुहृत्स्वजिह्मः स्निग्धेषु ब्राह्मणेषु क्षमान्वितः ॥ ६८
एवंवृत्तस्य नृपतेः शिलोञ्छेनापि जीवतः।
विस्तीर्य्यते यशो लोके तैलविन्दुरिवाम्भसि ॥ ६९
प्रजासुखे सुखी राजा तद्दुःखे यश्च दुःखितः।
स कीर्त्तियुक्तो लोकेऽस्मिन् प्रेत्य स्वर्गे महीयते ॥ ७०

इति वैष्णवे धर्म्मशास्त्रे तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः।

जालस्थार्कमरीचिगतं रजस्त्रसरेणुसंज्ञकम् ॥ १ ॥ तदष्टकं लिक्षा ॥ २ ॥ तत्त्रयं राजसर्षपः ॥ ३ ॥ तत्त्रयं गौरसर्षपः ॥ ४ ॥ तत्षट्कं यवः ॥ ५ ॥ तत्त्रयं कृष्णलम् ॥ ६ ॥ तत्पञ्चकं माषः ॥ ७ ॥ तद्द्वा- दशमक्षार्द्धम् ॥ ८ ॥ अक्षार्द्धमेव सचतुर्माषकं सुवर्णः ॥ ९ ॥ चतुःसुवर्णको निष्कः ॥ १० ॥ द्वे कृष्णले समधृते रूप्यमाषकः ॥ ११ ॥ तत्षोडशकं धरणम् ॥ १२ ॥ ताम्रकार्षिकः कार्षापणः ॥ १३ ॥

पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः।
मध्यमः पञ्च विज्ञेयः सहस्रन्त्वेव चोत्तमः ॥ १४ ॥
इति वैष्णवे धर्मशास्त्रे चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः।

अथ महापातकिनो ब्राह्मणवर्ज्जं सर्व्वे वध्याः॥ १ ॥ न शारीरो ब्राह्मणस्य दण्डः ॥ २ ॥ स्वदेशाद्ब्राह्मणं कृताङ्कं विवासयेत् ॥ ३ ॥ तत्र च ब्रह्महत्यायामशिरस्कं पुरुषं ललाटे कुर्य्यात् ॥४॥ सुराध्वजं सुरापाने ॥ ५ ॥ श्वपदं स्तेये ॥ ६ ॥ भगं गुरुतल्पगमने ॥ ७॥ अन्यत्रापि वध्यकर्म्मणि तिष्ठन्तं समग्रधनमक्षतं विवासयेत् ॥ ८ ॥ कूटशासनकर्त्तॄंश्च राजा हन्यात् ॥ ९ ॥ कूटलेख्यकारांश्च ॥ १० ॥ गरदाग्निदप्रसह्यतस्करान् स्त्रीबालपुरुषघातिनश्च ॥ ११ ॥ ये च धान्यं दशभ्यः कुम्भेभ्योऽधिकमपहरेयुः ॥ १२ ॥ धरिममेयानां शतादभ्यधिकम् ॥ १३ ॥ ये चाकुलीना राज्यमभिकामयेयुः ॥ १४ ॥ सेतुभेदकांश्च ॥ १५ ॥ प्रसह्यतस्कराणामवकाशभक्तप्रदांश्च ॥ १६ ॥ अन्यत्र राजाशक्तेः ॥ १७ ॥ स्त्रियमसक्तभर्त्तृकां तदतिक्रमणीं च ॥ १८ ॥ हीनवर्णोऽधिकवर्णस्य येनाङ्गेनापराधं कुर्य्यात् तदेवास्य शातयेत् ॥ १९ ॥ एकासनोपवेशी कट्यां कृताङ्को निर्व्वास्यः ॥ २० ॥ निष्ठीव्योष्ठद्वयविहीनः कार्य्यः ॥ २१ ॥ अवशर्द्धयिता च गुदहीनः ॥ २२ ॥ आक्रोशयिता च विजिह्वः ॥ २३ ॥ दर्पेण धर्म्मोपदेशकारिणो राजा तप्तमासेचयेत् तैलमास्ये॥ २४ ॥ द्रोहेण च नामजातिग्रहणे दशाङ्गुलोऽस्य शङ्कुर्निखेयः ॥ २५ ॥ श्रुतदेशजातिकर्म्मणामन्यथावादी कार्षापणशतद्वयं दण्ड्यः ॥ २६ ॥ काणखञ्जादीनां तथावाद्यपि कार्षापणद्वयम् ॥२७॥ गुरूनाक्षिपन् कार्षापणशतम् ॥ २८ ॥ परस्य पतनीयाक्षेपे कृते तूत्तमसाहसम् ॥ २९ ॥ उपपातकयुक्ते मध्यमम् ॥ ३० ॥ त्रैविद्यवृद्धानां क्षेपे जातिपूगानाञ्च ॥ ३१ ॥ ग्रामदेशयोः प्रथमसाहसम् ॥ ३२ ॥ व्यङ्गतायुक्ताक्षेपे कार्षापणशतम् ॥ ३३ ॥ मातृयुक्ते तूत्तमम् ॥ ३४ ॥ सवर्णाक्रोशने द्वादशपणान् दण्ड्यः ॥ ३५ ॥ हीनवर्णाक्रोशने षड्दण्ड्यः ॥ ३६ ॥ यथाकालमुत्तमसवर्णाक्षेपे तत्प्रमाणो दण्डः ॥ ३७ ॥ त्रयो वा कार्षापणाः ॥ ३८ ॥ शुष्कवाक्याभिधाने त्वेवमेव ॥ ३९ ॥ पारजायी सवर्णागमने तूत्तमसाहसं दण्ड्यः ॥ ४० ॥ हीनवर्णागमने मध्यमम् ॥ ४१ ॥ गोगमने च ॥ ४२ ॥ अन्त्यागमने वध्यः ॥ ४३ ॥ पशुगमने कार्षापणशतं दण्ड्यः ॥ ४४ ॥ दोषमनाख्याय कन्यां प्रयच्छंश्च ॥ ४५ ॥ तां च बिभृयात् ॥ ४६ ॥ अदुष्टां दुष्टामिति ब्रुवन्नुत्तमसाहसम् ॥ ४७ ॥ गजाश्वोष्ट्रगोघाती त्वेककरपादः कार्य्यः ॥ ४८ ॥ विमांसविक्रयी च ॥ ४९ ॥ ग्राम्यपशुघाती कार्षापणशतं दण्ड्यः ॥ ५० ॥ पशुस्वामिने तन्मूल्यं दद्यात् ॥५१॥ आरण्यपशुघाती पञ्चाशतं कार्षापणान् ॥ ५२ ॥ पक्षिघाती मत्स्यघाती च दश कार्षापणान् ॥ ५३ ॥ कीटोपघाती च कार्षापणम् ॥ ५४ ॥ फलोपगमद्रुमच्छेदी तूत्तमसाहसम् ॥ ५५ ॥ पुष्पोपगमद्रुमच्छेदी मध्यमम् ॥ ५६ ॥ वल्लीगुल्मलताच्छेदी कार्षापणशतम् ॥ ५७ ॥ तृणच्छेद्येकम् ॥ ५८ ॥ सर्व्वे च तत्स्वामिनां तदुत्पत्तिम् ॥ ५९ ॥ हस्तेन वगोरयिता दश कार्षापणान् ॥ ६० ॥ पादेन विंशतिम् ॥ ६१ ॥ काष्ठेन प्रथमसाहसम् ॥ ६२ ॥ पाषाणेन मध्यमम् ॥ ६३ ॥ शस्त्रेणोत्तमम् ॥ ६४ ॥ पादकेशांशुककरलुञ्चने दश पणान् दण्ड्यः ॥ ६५ ॥ शोणितेन विना दुःखमुत्पादयिता द्वात्रिंशत्पणान्॥ ६६ ॥ सह शोणितेन चतुःषष्टिम् ॥ ६७ ॥ करपाददन्तभङ्गे कर्णनासाविकर्त्तने मध्यमम् ॥ ६८ ॥ चेष्टाभोजनवाग्रोधे प्रहारदाने च ॥ ६९॥ नेत्रकन्धराबाहुसक्थ्यंसभङ्गे चोत्तमम् ॥ ७० ॥ उभयनेत्रभेदिनं राजा यावज्जीवं बन्धनान्न विमुञ्चेत् ॥७१॥ तादृशमेव वा कुर्य्यात् ॥ ७२ ॥ एकं बहूनां निघ्नतां

प्रत्येकमुत्तमाङ्गच्छेदाद्द्विगुणः ॥ ७३ ॥ उत्क्रोशन्तमभिधाविनां तत्समीपवर्त्तिनां संसरणाच्च ॥ ७४ ॥ सर्व्वे च पुरुषपीडाकरास्तदुत्थानव्ययं दद्युः ॥ ७५ ॥ ग्राम्यपशुपीडाकराश्च ॥ ७६ ॥ गोऽश्वोष्ट्रगजापहार्य्येकपादः कार्य्यः ॥ ७७ ॥ अजाविकापहार्य्येककरश्च ॥ ७८ ॥ धान्यापहार्य्येकादशगुणं दण्ड्यः ॥ ७९ ॥ ब्रह्मापहारी च ॥ ८० ॥ सुवर्णरजतवस्त्राणां पञ्चाशतस्त्वभ्यधिकमपहरन् विकरः ॥ ८१ ॥ तदूनमेकादशगुणं दण्ड्यः ॥ ८२ ॥ सूत्रकार्पासगोमयगुडदधिक्षीरतक्रतृण-लवणमृद्भस्मपक्षिमत्स्य-घृततैल-मांस-मधुवैदल-वेणुमृण्मयलौहद्रव्याणामपहर्त्ता मूल्यात् त्रिगुणं दण्ड्यः ॥ ८३ ॥ पक्वान्नानाञ्च ॥ ८४ ॥ पुष्पहरितगुल्मवल्लीलतापर्णानामपहर्त्ता पञ्च कृष्णलान् ॥ ८५ ॥ शाकमूलफलानाञ्च ॥ ८६ ॥ रत्नापहार्य्युत्तमसाहसम् ॥ ८७ ॥ अनुक्तद्रव्याणामपहर्त्ता मूल्यसमम् ॥ ८८ ॥ स्तेनाः सर्व्वमपहृतं धनिकस्य दाप्याः ॥ ८९ ॥ ततस्तेषामभिहितदण्डप्रयोगः ॥ ९० ॥ येषां देयः पन्थास्तेषामपथदायी कार्षापणानां पञ्चविंशतिं दण्ड्यः ॥ ९१ ॥ आसनार्हस्यासनमदत्त्वा च ॥ ९२ ॥ पूजार्हमपूजयंश्च ॥ ९३ ॥ प्रातिवेश्यब्राह्मणनिमन्त्रणातिक्रमे च ॥ ९४ ॥ निमन्त्रयित्वा भोजनादायिनश्च ॥ ९५ ॥ निमन्त्रितस्तथेत्युक्त्वा चाभुञ्जानः सुवर्णमाषकं निमन्त्रयितुश्च द्विगुणमन्नम् ॥ ९६ ॥ अभक्ष्येण ब्राह्मणं दूषयिता षोडश सुवर्णान् ॥ ९७ ॥ जात्यपहारिणा शतम् ॥ ९८ ॥ सुरया वध्यः ॥ ९९ ॥ क्षत्रियं दूषयितुस्तदर्द्धम् ॥ १०० ॥ वैश्यं दूषयितुस्तदर्द्धमपि ॥ १०१ ॥ शूद्रं दूषयितुः प्रथमसाहसम् ॥ १०२ ॥ कामकारेणास्पृश्यस्त्रैवर्णिकं स्पृशन् वध्यः ॥ १०३ ॥ रजस्वलां शिफाभिस्ताडयेत् ॥ १०४ ॥ पथ्युद्यानोदकसमीपेऽशुचिकारी पणशतम् ॥ १०५ ॥ तच्चापास्येत् ॥ १०६ ॥ गृहभूकुड्यापभेत्ता मध्यमसाहसं दण्ड्यः ॥ १०७ ॥ तच्च योजयेत् ॥ १०८ ॥ गृहपीडाकरं द्रव्यं प्रक्षिपन् पणशतम् ॥ १०९ ॥ साधारणस्यापलापी च ॥ ११० ॥ दीक्षितस्य प्रहर्त्ता च ॥ १११ ॥ पितृपुत्राचार्य्ययाज्यर्त्विजामन्योन्यापतितत्यागी च ॥ ११२ ॥ न च तान् जह्यात् ॥ ११३ ॥ शूद्रप्रव्रजितानां दैव पित्र्य भोजकश्च ॥ ११४ ॥ अयोग्यकर्म्मकारी च ॥ ११५ ॥ समुद्गगृहभेदकः ॥ ११६ ॥ अनियुक्तः शपथकारी ॥ ११७ ॥ पशूनां पुंस्त्वोपघातकारी ॥ ११८ ॥ पितापुत्रविरोधे तु साक्षिणां दशपणो दण्डः ॥ ११९ ॥ यस्तयोश्चान्तरः स्यात् तस्योत्तमसाहसम् ॥ १२० ॥ तुलामानकूटकर्त्तुश्च ॥ १२१ ॥ तदकूटे कूटवादिनश्च ॥ १२२ ॥ द्रव्याणां प्रतिरूपविक्रयिकस्य च ॥ १२३ ॥ सम्भूय वणिजां पण्यमनर्घेणावरुन्धताम् ॥ १२४ ॥ प्रत्येकं विक्रीणताञ्च ॥ १२५ ॥ गृहीतमूल्यं पण्यं यः क्रेतुर्नैव दद्यात् तस्यासौ सोदयं दाप्यः ॥ १२६ ॥ राज्ञा च पणशतं दण्ड्यः ॥ १२७ ॥ क्रीतमक्रीणतो या हानिः सा क्रेतुरेव स्यात् ॥ १२८ ॥ राजनिषिद्धं विक्रीणतस्तदपहारः ॥ १२९ ॥ तारिकः स्थलजं शुल्कं गृह्णन् दश पणान् दण्ड्यः ॥ १३० ॥ ब्रह्मचारिवानप्रस्थभिक्षुगुर्व्विणीतीर्थानुसारिणां नाविकः शौल्किकः शुल्कमाददानश्च ॥ १३१ ॥ तच्च तेषां दद्यात् ॥ १३२ ॥ द्यूते कूटाक्षदेविनां करच्छेदः ॥ १३३ ॥ उपधिदेविनां सन्दंशच्छेदः ॥ १३४ ॥ ग्रन्थिभेदकानां करच्छेदः ॥ १३५ ॥ दिवा पशूनां वृकाद्युपघाते पाले त्वनायति पालदोषः ॥ १३६ ॥ विनष्टपशुमूल्यञ्च स्वामिने दद्यात् ॥ १३७ ॥ अननुज्ञातो दुहन् पञ्चविंशतिकार्षापणान् दण्ड्यः ॥ १३८ ॥ महिषी चेच्छस्यनाशं कुर्य्यात् तत्पालकस्त्वष्टौ माषकान् दण्ड्यः ॥ १३९ ॥ अपालायाः स्वामी ॥ १४० ॥ अश्वश्चोष्ट्रो गर्द्दभो वा ॥ १४१ ॥ गौश्चेत् तदर्द्धम् ॥ १४२ ॥ तदर्द्धमजाविकम् ॥ १४३ ॥ भक्षयित्वोपविष्टेषु द्विगुणम् ॥ १४४ ॥ सर्व्वत्र स्वामिने विनष्टशस्यमूल्यञ्च ॥ १४५ ॥ पथि ग्रामे विवीतान्ते न दोषः ॥ १४६ ॥ अनावृते च ॥ १४७ ॥

अध्यशतम् ॥ १४८ ॥ उत्कृष्टवृषभदातिकानाञ्च ॥ १४९ ॥ यश्चोत्तमवर्णान् दास्ये नियोजयेत् तस्योत्तमसाहसो दण्डः ॥ १५० ॥ व्यक्तप्रव्रज्यो यश्च दास्यं कुर्य्यात् ॥ १५१ ॥ भृतकश्च पूर्णकाले भृतिं त्यजन् सकलमेव मूल्यं दद्यात् ॥ १५२ ॥ राज्ञे च पणशतं दद्यात् ॥ १५३ ॥ तद्दोषेण यद्विनश्येत् तत् स्वामिने। अन्यत्र दैवोपघातात् ॥ १५४ ॥ स्वामी चेद्भृतकमपूर्णे काले जह्यात् तस्य सर्व्वं मूल्यं दद्यात् ॥ १५५ ॥ पणशतञ्च राजनि अन्यत्र भृतकदोषात् ॥ १५६ ॥ यः कन्यां पूर्व्वदत्तामन्यस्मै दद्यात् स चौरवच्छास्यः। वरदोषं विना ॥ १५७ ॥ निर्दोषां परित्यजन् पत्नीञ्च ॥ १५८ ॥ अज्ञानतः प्रकाशं यः परद्रव्यं क्रीणीयात् तत्र तस्यादोषः ॥ १५९ ॥ स्वामी द्रव्यमाप्नुयात् ॥ १६० ॥ यद्यप्रकाशं हीनमूल्यञ्च क्रीणीयात् तदा क्रेता विक्रेता च चौरवच्छास्यौ ॥ १६१ ॥ गणद्रव्यापहर्त्ता विवास्यः ॥ १६२ ॥ तत्संविदं यश्च लङ्घयेत् ॥ १६३ ॥ निक्षेपापहार्य्यर्थवृद्धिसहितं धनं धनिकस्य दाप्यः ॥ १६४ ॥ राज्ञा चौरवच्छास्यः ॥ १६५ ॥ यश्चानिक्षिप्तं निक्षिप्तमिति ब्रूयात् ॥ १६६ ॥ सीमाभेत्तारमुत्तमसाहसं दण्डयित्वा पुनः सीमां लिङ्गाङ्कितां कारयेत् ॥ १६७ ॥ जातिभ्रंशकरस्याभक्ष्यस्य भक्षयिता विवास्यः ॥ १६८ ॥ अभक्ष्यस्याविक्रेयस्य च विक्रयी ॥ १६९ ॥ देवप्रतिमाभेदकश्चोत्तमसाहसं दण्डनीयः ॥ १७० ॥ भिषङ् मिथ्याचरन् उत्तमेषु पुरुषेषु ॥ १७१ ॥ मध्यमेषु मध्यमम् ॥ १७२ ॥ तिर्य्यक्षु प्रथमम् ॥ १७३ ॥ प्रतिश्रुत्याप्रदायी तद्दापयित्वा प्रथमसाहसं दण्ड्यः ॥ १७४ ॥ कूटसाक्षिणां सर्व्वस्वापहारः कार्य्यः ॥ १७५ ॥ उत्कोचोपजीविनां सभ्यानाञ्च ॥ १७६ ॥ गोचर्म्ममात्रामपि भुवमन्यस्याविज्ञातां तस्मादनिर्मोच्य अन्यस्य यः प्रयच्छेत् स वध्यः ॥ १७७ ॥ कन्याञ्चेत् षोड़श सुवर्णान् दण्ड्यः ॥ १७८ ॥

एकोऽभ्यायाद्भवतृपञ्च नरः संवत्सरं भजन्।
गोचर्म्ममात्रा सा चौर्य्या स्तोका वा यदि वा बहुः॥१७९
ययोर्निक्षिप्त आधिस्तौ विवदेतां यदा नरौ।
यस्य भुक्तिः फलं तस्य बलात्कारं विना सता ॥१८०
आगमेन च भोगेन भुक्तं सम्यग्यदा भवेत्।
आहर्त्ता लभते तत्र नापहार्य्यन्तु तत् क्वचित् ॥१८१
पित्रा भुक्तन्तु यद्द्रव्यं भुक्त्याचारेण धर्म्मतः।
तस्मिन् प्रेते न वाच्योऽसौ भुक्त्या प्राप्तं हि तस्य तत्॥
त्रिभिरेव च या भुक्ता पुरुषैर्भूर्यथाविधि।
लेख्याभावेऽपि तां तत्र चतुर्थः समवाप्नुयात् ॥१८३॥
नर्त्तिनां दंष्ट्रिणाञ्चैव शृङ्गिणामाततायिनाम्।
हस्त्यश्वानां तथान्येषां वधे हन्ता न दोषभाक् ॥१८४
गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम्।
आततायिनमायान्तं हन्यादेवाविचारयन् ॥१८५॥
आततायिवधे दोषो हन्तुर्भवति कश्चन।
प्रकाशं वाप्रकाशं वा मन्युस्तन्मन्युमृच्छति ॥ १८६॥
उद्यतासिविषाग्निञ्च शापोद्यतकरं तथा।
आथर्व्वणेन हन्तारं पिशुनञ्चैव राजसु ॥१८७॥
भार्य्यातिक्रमिणञ्चैव विद्यात् सप्ताततायिनः।
यशोवित्तहरानन्यानाहुर्धर्म्मार्थहारकान् ॥ १८८ ॥
उद्देशतस्ते कथितो घोरे दण्डविधिर्मया।
सर्व्वेषामपराधानां विस्तरादतिविस्तरः ॥ १८९ ॥
अपराधेषु चान्येषु ज्ञात्वा जातिं धनं वयः।
दण्डं प्रकल्पयेद्राजा सम्मन्त्र्य ब्राह्मणैः सह ॥ १९०॥
दण्ड्यं प्रमोचयन् दण्ड्याद्द्विगुणं दण्डमावहेत्।
नियुक्तश्चाप्यदण्ड्यानां दण्डकारी नराधमः ॥ १९१ ॥
यस्य चौरः पुरे नास्ति नान्यस्त्रीगो न दुष्टवाक्।
न साहसिकदण्डघ्नौ स राजा शक्रलोकभाक् ॥१९२॥

इति वैष्णवे धर्म्मशास्त्रे पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः।

अथोत्तमर्णोऽधमर्णाद्यथादत्तमर्थं गृह्णीयात् ॥ १ ॥ द्विकं त्रिकं चतुष्कं पञ्चकञ्च शतं वर्णानुक्रमेण प्रतिमासम् ॥ २ ॥ सर्व्वे वर्णा वा स्वप्रतिपन्नां वृद्धिं दद्युः ॥ ३ ॥ अकृतामपि वत्सरातिक्रमेण

[illegible]विहिताम् ॥ ४ ॥ आध्युपभोगे वृद्ध्यभावः ॥ ५ ॥ दैवराजोपघातादृते विनष्टम् आधिमुत्तमर्णो दद्यात् ॥ ६ ॥ अन्यत्र प्रविष्टायामपि ॥ ७ ॥ न स्थावरमाधिं ... ते वचनात् ॥ ८ ॥ गृहीतधनप्रवेशार्थमेव यत् स्थावरं दत्तं तद्गृहीतधनप्रवेशे देयं तु ॥ ९ ॥ दीयमानं प्रयुक्तमर्थमुत्तमर्णो यदा न गृह्णाति ततः परं न वर्द्धते ॥ १० ॥ हिरण्यस्य परा वृद्धिर्द्विगुणा ॥ ११ ॥ धान्यस्य त्रिगुणा ॥ १२ ॥ वस्त्रस्य चतुर्गुणा ॥ १३ ॥ रसस्याष्टगुणा ॥ १४ ॥ सन्ततिः स्त्रीपशूनाम् ॥ १५ ॥ किण्वकार्पाससूत्रचर्म्मत्रपुसीसकाङ्गाराणामक्षया ॥ १६ ॥ अनुक्तानां द्विगुणा ॥ १७ ॥ प्रयुक्तमर्थं यथाकथञ्चित् साधयन् न राज्ञो वाच्यः स्यात् ॥ १८ ॥ साध्यमानश्चेद्राजानमभिगच्छेत् तत्समं दण्ड्यः ॥ १९ ॥ उत्तमर्णश्चेद्राजानमियात् तद्विभावितोऽधमर्णो राज्ञे धनदशभागसम्मितं दण्डं दद्यात् ॥ २० ॥ प्राप्तार्थश्चोत्तमर्णो विंशतितमम् अंशम् ॥ २१ ॥ सर्व्वापलाप्येकदेशविभावितोऽपि सर्व्वं दद्यात् ॥ २२ ॥ तस्य च भावनास्तिस्रो भवन्ति लिखितं साक्षिणः समयक्रिया च ॥ २३ ॥ ससाक्षिकमात्तं ससाक्षिकमेव दद्यात् ॥ २४ ॥ लिखितार्थे प्रविष्टे लिखितं पाटयेत् ॥ २५ ॥ अर्द्धप्रदाने लेख्यार्थसन्निधाने चोत्तमर्णः स्वलिखितं दद्यात् ॥ २६ ॥ धनग्राहिणि प्रेते प्रव्रजिते विंशतिसमाः प्रवसिते वा तत्पुत्रपौत्रैर्धनं देयम् ॥ २७ ॥ नातः परमनीप्सुभिः ॥ २८ ॥ सपुत्रस्य वापुत्रस्य वा ऋक्थग्राही ऋणं दद्यात् ॥ २९ ॥ निर्धनस्य स्त्रीग्राही ॥ ३० ॥ न स्त्री पतिपुत्रकृतम् ॥ ३१ ॥ न स्त्रीकृतं पतिपुत्रौ ॥ ३२ ॥ न पिता पुत्रकृतम् ॥ ३३ ॥ अविभक्तैः कृतमृणं यस्तिष्ठेत् स दद्यात् ॥ ३४ ॥ पैतृकमृणमविभक्तानां भ्रातॄणाञ्च ॥ ३५ ॥ विभक्ताश्च दायानुरूपमंशम् ॥ ३६ ॥ गोपशौण्डिकशैलूषरजकव्याधस्त्रीणां पतिर्दद्यात् ॥ ३७ ॥ वाक्प्रतिपन्नं कुटुम्बिना देयम् ॥ ३८ ॥ कथञ्चित् कुटुम्बार्थे कृतञ्च ॥ ३९ ॥

यो गृहीत्वा ऋणं सर्व्वं श्वो दास्यामीति कामकम् ।
न दद्याल्लोभतः पश्चात् तथा वृद्धिमवाप्नुयात् ॥ ४० ॥
दर्शने प्रत्यये दाने प्रातिभाव्यं विधीयते ।
आद्यौ तु वितथे दाप्यावितरस्य सुता अपि ॥ ४१ ॥
बहवश्चेत् प्रतिभुवो दद्युस्तेऽर्थं यथाकृतम् ।
अथाविशेषिते त्वेष धनिकच्छन्दतः क्रिया ॥ ४२ ॥
यस्यार्थे प्रतिभूर्दद्याद्धनिकेनोपपीडितः ।
ऋणिकस्तं प्रतिभुवे द्विगुणं दातुमर्हति ॥ ४३ ॥

इति वैष्णवे धर्म्मशास्त्रे षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः ।

अथ लेख्यं त्रिविधम् ॥ १ ॥ राजसाक्षिकं ससाक्षिकमसाक्षिकञ्च ॥ २ ॥ राजाधिकरणे तन्नियुक्त-कायस्थकृतं तदध्यक्ष-करचिह्नितं राजसाक्षिकम् ॥ ३ ॥ यत्र क्वचन येन केनचिल्लिखितं साक्षिभिः स्वहस्तचिह्नितं ससाक्षिकम् ॥ ४ ॥ स्वहस्तलिखितमसाक्षिकम् ॥ ५ ॥ बलात्कारितमप्रमाणम् ॥ ६ ॥ उपधिकृतञ्च सर्व्वमेव ॥ ७ ॥ दूषितकर्म्मदुष्टसाक्ष्यङ्कितं तत् ससाक्षिकमपि ॥ ८ ॥ तादृग्विधेन लिखितञ्च ॥ ९ ॥ स्त्रीबालास्वतन्त्रमत्तोन्मत्तभीतताडितकृतञ्च ॥ १० ॥ देशाचाराविरुद्धं व्यक्ताधिकृतलक्षणमविलुप्तक्रमाक्षरं प्रमाणम् ॥ ११ ॥

वर्णैश्च तत्कृतैश्चिह्नैः पत्रैरेव च युक्तिभिः ।
सन्दिग्धं साधयेल्लेख्यं तद्युक्तिप्रतिरूपितैः ॥ १२ ॥
यद्यर्थी धनिको वापि साक्षी वा लेखकोऽपि वा ।
म्रियेरंस्तत्र तल्लेख्यं तत्स्वहस्तैः प्रसाधयेत् ॥ १३ ॥

इति वैष्णवे धर्म्मशास्त्रे सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः ।

अथासाक्षिणः ॥ १ ॥ न राजश्रोत्रियप्रव्रजितकितवतस्करपराधीनस्त्रीबालसाहसिकातिवृद्धमत्तोन्मत्ताभिशस्तपतितक्षुत्तृष्णार्त्तव्यसनिरागान्धाः ॥ २ ॥

रिपुमित्रार्थसम्बन्धिविकर्मकृद्दृष्टदोषसहायाश्च ॥ ३ ॥ अनिर्दिष्टस्तु साक्षित्वे यश्चोपेत्य ब्रूयात् ॥ ४ ॥ एकश्चासाक्षी ॥ ५ ॥ स्तेयसाहसवाग्दण्डपारुष्य-संग्रहणेषु साक्षिणो न परीक्ष्याः स्युः ॥ ६ ॥ अथ साक्षिणः ॥ ७ ॥ कुलजा वृत्तवित्तसम्पन्ना यज्वान-स्तपस्विनः पुत्रिणो धर्मज्ञा अधीयानाः सत्यवन्त-स्त्रैविद्यवृद्धाश्च ॥ ८ ॥ अभिहितगुणसम्पन्न उभ-यानुमत एकोऽपि ॥ ९ ॥ द्वयोर्विवदमानयोर्यस्य पूर्ववादस्तस्य साक्षिणः प्रष्टव्याः ॥ १० ॥ आधर्ष्यं कार्यवशाद्यत्र पूर्वपक्षस्य भवेत् तत्र प्रतिवादिनो-ऽपि ॥ ११ ॥ उद्दिष्टसाक्षिणि मृते देशान्तरगते वा तदभिहितश्रोतारः प्रमाणम् ॥ १२ ॥ समक्ष-दर्शनात् साक्षी श्रवणाद्वा ॥ १३ ॥ साक्षिणश्च सत्येन पूयन्ते ॥ १४ ॥ वर्णिनां यत्र वधस्तत्रानृतेन ॥ १५ ॥ तत्पावनाय कूष्माण्डीभिर्द्विजोऽग्निं जुहु-यात् ॥ १६ ॥ शूद्र एकाह्निकं गोर्ग्रासं दद्यात् ॥ १७ ॥ स्वयमविज्ञातौ ऋणवर्णविनाशे-ऽसम्बन्धप्रापे च कूटसाक्षिणं विद्यात् ॥ १८ ॥ साक्षिणश्चाहूयादित्योदये कृतशपथान् पृच्छेत् ॥ १९ ॥ सत्येति ब्राह्मणं पृच्छेत् ॥ २० ॥ सत्यं ब्रूहीति राजन्यम् ॥ २१ ॥ गोबीजकाञ्चनैर्वैश्यम् ॥ २२ ॥ सर्वमहापातकैस्तु शूद्रम् ॥ २३ ॥ साक्षि-णश्च श्रावयेत् ॥ २४ ॥ ये महापातकिनो लोका ये चोपपातकिनस्तु कूटसाक्षिणामपि ॥ २५ ॥ जन्ममरणान्तरे कृतसुकृतफलानि च ॥ २६ ॥ सत्य-मादित्यस्तपति ॥ २७ ॥ सत्येन भाति चन्द्रमाः ॥ २८ ॥ सत्येन वाति पवनः ॥ २९ ॥ सत्येन भूर्धारयति ॥ ३० ॥ सत्येनापस्तिष्ठन्ति ॥ ३१ ॥ सत्येनाग्निस्तिष्ठति ॥ ३२ ॥ खञ्च सत्येन ॥ ३३ ॥ सत्येन देवाः ॥ ३४ ॥ सत्येन यज्ञाः ॥ ३५ ॥

अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ ३६ ॥
जानन्तोऽपि हि ये साक्ष्ये तूष्णीम्भावमुपासते ।
ते कूटसाक्षिणां पापैस्तुल्या दण्डेन चाप्यथ ॥ ३७ ॥
एवं हि साक्षिणं पृच्छेद्वर्णानुक्रमतो नृपः ।
यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत् ।
अन्यथावादिनो यस्य ध्रुवस्तस्य पराजयः ॥ ३८ ॥
बहुत्वं परिगृह्णीयात् साक्षिद्वैधे नराधिपः ।
समेषु च गुणोत्कृष्टान् गुणिद्वैधे द्विजोत्तमान् ॥ ३९ ॥
यस्मिन् यस्मिन् विवादे तु कूटसाक्ष्यकृतं वदेत् ।
तत्तत् कार्यं निवर्तेत कृतञ्चाप्यकृतं भवेत् ॥ ४० ॥

इति वैष्णवे धर्मशास्त्रेऽष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः ।

अथ समयक्रिया ॥ १ ॥ राजद्रोहसाहसेषु यथाकामम् ॥ २ ॥ निक्षेपस्तेयेष्वर्थप्रमाणम् ॥ ३ ॥ सर्वेष्वेवार्थजातेषु मूल्यं कनकं कल्पयेत् ॥ ४ ॥ तत्र कृष्णलोने शूद्रं दूर्वाकरं शापयेत् ॥ ५ ॥ द्विकृष्णलोने तिलकरम् ॥ ६ ॥ त्रिकृष्णलोने रजतकरम् ॥ ७ ॥ चतुःकृष्णलोने सुवर्णकरम् ॥ ८ ॥ पञ्चकृष्णलोने सीतोद्धृतपांशुकरम् ॥ ९ ॥ सुवर्णार्धोने कोशो देयः शूद्रस्य ॥ १० ॥ ततः परं यथार्हं घटाग्न्युदकविषाणामन्यतमम् ॥ ११ ॥ द्विगुणेऽर्थे यथाभिहिता समयक्रिया वैश्यस्य ॥ १२ ॥ त्रिगुणे राजन्यस्य ॥ १३ ॥ कोशवर्जं चतुर्गुणे ब्राह्मणस्य ॥ १४ ॥ न ब्राह्मणस्य कोशं दद्यात् ॥ १५ ॥ अन्यत्रागामिकालसमयनिबन्धनक्रियातः ॥ १६ ॥ कोशस्थाने ब्राह्मणं सीतोद्धृतपांशुकरमेव ॥ १७ ॥ प्रागुक्तशपथं स्वल्पेऽप्यर्थे द्विजानामन्यतममेव कार-येत् ॥ १८ ॥ सवृत्ते विदितं चरितं न भवत्य-ऽपि ॥ १९ ॥ अभियोक्ता वर्तयेच्छीर्षम् ॥ २० ॥ अभियुक्तश्च दिव्यं कुर्यात् ॥ २१ ॥ राजद्रोह-साहसेषु विनापि शीर्षवर्तनात् ॥ २२ ॥ स्त्रीबालवृद्ध-विकलासमर्थरोगिणां तुला देया ॥ २३ ॥ सा च न वाति वायौ ॥ २४ ॥ न कुष्ठ्यसमर्थलोहकारा-णामग्निर्देयः ॥ २५ ॥ शरद्ग्रीष्मयोश्च ॥ २६ ॥ न कुष्ठिपैत्तिकब्राह्मणानां विषं देयम् ॥ २७ ॥

...यमपि च ॥ २८ ॥ न ब्राह्मणस्याध्यहितानां भीरुत्वा
...रकाविनामब्राह्मीविना चोदकम् ॥ २९ ॥ हेमन्त-
...शिरयोश्च ॥ ३० ॥ न नास्तिकेभ्यः कोशो देयः ॥
... ॥ न देशे चाधिमरकोपसृष्टे च ॥ ३२ ॥
...षितं स्नातमाहूय सूर्योदय उपोषितम् ।
...कारयेत् सर्व्वदिव्यानि देवब्राह्मणसन्निधौ ॥ ३३ ॥
इति वैष्णवे धर्म्मशास्त्रे नवमोऽध्यायः ॥९॥

---

## दशमोऽध्यायः ।

...थ धटः ॥१॥ चतुर्हस्तोच्छ्रितो द्विहस्तायतः ॥२॥
...न चारस्थोद्भवः पञ्चहस्तायतोभयतः शिक्या
...ढा ॥ ३ ॥ ताञ्च सुवर्णकारकांस्यकाराणामन्य-
...मो विभृयात् ॥ ४ ॥ तत्र चैकस्मिन् शिक्ये
...षमारोपयेद्द्वितीये प्रतिमानं शिलादि ॥ ५ ॥
...तिमानपुरुषौ समधृतौ सुचिह्नितौ कृत्वा पुरुष-
...वतारयेत् ॥ ६ ॥ धटश्च समयेन गृह्णीयात् ॥ ७ ॥
...ाधारञ्च ॥ ८ ॥
...ह्मा ये स्मृता लोका ये लोकाः कूटसाक्षिणाम् ।
...ाधारस्य ते लोकास्तुलां धारयतो मृषा ॥ ९ ॥
...र्म्मपर्य्यायवचनैर्धट इत्यभिधीयसे ।
...मेव धट जानीषे न विदुर्यानि मानुषाः ॥ १० ॥
...यवहाराभिशस्तोऽयं मानुषस्तुल्यते त्वयि ।
...देनं संशयादस्माद्धर्म्मतस्त्रातुमर्हसि ॥ ११ ॥
...मस्त्वारोपयेच्छिक्ये भूय एवाथ तं नरम् ।
...लितो यदि वर्द्धेत ततः स धर्म्मतः शुचिः ॥ १२ ।
...शिक्यच्छेदाक्षभङ्गेषु भूयस्त्वारोपयेन्नरम् ।
...एवं निःसंशयं ज्ञानं यतो भवति निर्णयः ॥ १३ ॥
इति वैष्णवे धर्म्मशास्त्रे दशमोऽध्यायः ॥ १० ॥

---

## एकादशोऽध्यायः ।

अथाग्निः ॥ १ ॥ षोडशाङ्गुलं तावदन्तरं
...मण्डलसप्तकं कुर्यात् ॥ २ ॥ ततः प्राङ्मुखस्य
...प्रसारितभुजद्वयस्य सप्ताश्वत्थपत्राणि करयोर्दद्यात् ॥
३ ॥ तानि च करद्वयसहितानि सूत्रेण वेष्टयेत् ॥
४ ॥ ततस्तत्राग्निवर्णं लोहपिण्डं पञ्चाशत्पलिकं
समं न्यसेत् ॥ ५ ॥ तमादाय नातिद्रुतं नातिविल-
म्बितं मण्डलेषु पदन्यासं कुर्व्वन् व्रजेत् ॥ ६ ॥ ततः
सप्तमं मण्डलमतीत्य भूमौ लोहपिण्डं जह्यात् ॥ ७॥
यो हस्तयोः क्वचिद्दग्धस्तमशुद्धं विनिर्दिशेत् ।
न दग्धः सर्व्वथा यस्तु स विशुद्धो भवेन्नरः ॥ ८ ॥
भयाद्वा पातयेद्यस्तु दग्धो वा न विभाव्यते ।
पुनस्तं हारयेल्लोहं समयस्याविशोधनात् ॥ ९ ॥
करौ विमृदितव्रीहेस्तस्य ह्यादौ लक्षयेत् ।
अभिमन्त्र्यास्य करयोर्लोहपिण्डं ततो न्यसेत् ॥ १० ॥
त्वमग्ने सर्व्वभूतानामन्तश्चरसि साक्षिवत् ।
त्वमेवाग्ने विजानीषे न विदुर्यानि मानवाः ॥ ११ ॥
व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति ।
तदेनं संशयादस्माद्धर्म्मतस्त्रातुमर्हसि ॥ १२ ॥
इति वैष्णवे धर्म्मशास्त्रे एकादशोऽध्यायः ॥ ११ ॥

---

## द्वादशोऽध्यायः ।

अथोदकम् ॥ १ ॥ पङ्कशैवालदुष्टग्राहमत्स्य-
जलौकादिवर्ज्जितेऽम्भसि ॥ २ ॥ तत्रानाभिमग्न-
स्यारागद्वेषिणः पुरुषस्यान्यस्य जानुनी गृहीत्वा-
भिमन्त्रितमम्भः प्रविशेत् ॥ ३ ॥ तत्समकालञ्च
नातिक्रूरमृदुना धनुषा पुरुषोऽपरः शरक्षेपं कुर्य्यात्॥
४ ॥ तञ्चापरः पुरुषो जवेन शरमानयेत् ॥ ५ ॥
तन्मध्ये यो न दृश्येत स शुद्धः परिकीर्त्तितः ।
अन्यथा त्वविशुद्धः स्यादेकाङ्गस्यापि दर्शने ॥ ६
त्वमम्भः सर्व्वभूतानामन्तश्चरसि साक्षिवत् ।
त्वमेवाम्भो विजानीषे न विदुर्यानि मानुषाः ॥ ७
व्यवहाराभिशस्तोऽयं मानुषस्त्वयि मज्जति ।
तदेनं संशयादस्माद्धर्म्मतस्त्रातुमर्हसि ॥ ८
इति वैष्णवे धर्म्मशास्त्रे द्वादशोऽध्यायः ॥ १२ ॥

---

## त्रयोदशोऽध्यायः ।

अथ विषम् ॥ १ ॥ विषाण्यदेयानि सर्व्वाणि ॥ २ ॥ ऋते हिमाचलोद्भवाच्छार्ङ्गात् ॥ ३ ॥ तस्य च यवसप्तकं घृतप्लुतमभियुक्ताय दद्यात् ॥ ४ ॥

विषं वेगक्रमापेतं सुखेन यदि जीर्य्यते ।
विशुद्धं तमिति ज्ञात्वा दिवसान्ते विसर्ज्जयेत् ॥ ५ ॥
विषत्वाद्विषमत्वाच्च क्रूरं त्वं सर्व्वदेहिनाम् ।
त्वमेव विष जानीषे न विदुर्यानि मानुषाः ॥ ६ ॥
व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति ।
तदेनं संशयादस्माद्धर्म्मतस्त्रातुमर्हसि ॥ ७ ॥

इति वैष्णवे धर्म्मशास्त्रे त्रयोदशोऽध्यायः ॥ १३ ॥

---

## चतुर्द्दशोऽध्यायः ।

अथ कोशः ॥ १ ॥ उग्रान् देवान् समभ्यर्च्य तत्स्नानोदकात् प्रसृतित्रयं पिबेत् ॥ २ ॥ इदं मया न कृतमिति व्याहरन् देवताभिमुखः ॥ ३ ॥

यस्य पश्येद्द्विसप्ताहात्त्रिसप्ताहादथापि वा ।
रोगोऽग्निर्ज्ञातिमरणं राजातङ्कमथापि वा ॥ ४ ॥
तमशुद्धं विजानीयात् तथा शुद्धं विपर्य्यये ।
दिव्ये च शुद्धं पुरुषं सत्कुर्य्याद्धार्म्मिको नृपः ॥ ५ ॥

इति वैष्णवे धर्म्मशास्त्रे चतुर्द्दशोऽध्यायः ॥ १४ ॥

---

## पञ्चदशोऽध्यायः ।

अथ द्वादश पुत्रा भवन्ति ॥ १ ॥ स्वे क्षेत्रे संस्कृतायामुत्पादितः स्वयमौरसः प्रथमः ॥ २ ॥ नियुक्तायां सपिण्डेनोत्तमवर्णेन वोत्पादितः क्षेत्रजो द्वितीयः ॥ ३ ॥ पुत्रिकापुत्रस्तृतीयः ॥ ४ ॥ यस्तस्याः पुत्रः स मे पुत्रो भवेदिति या पित्रा दत्ता सा पुत्रिका ॥ ५ ॥ पुत्रिकाविधिना प्रतिपादितापि भ्रातृविहीना पुत्रिकैव ॥ ६ ॥ पौनर्भवश्चतुर्थः ॥ ७ ॥ अक्षता भूयः संस्कृता पुनर्भूः ॥ ८ ॥ भूयस्त्वसंस्कृतापि परपूर्व्वा ॥ ९ ॥ कानीनः पञ्चमः ॥ १० ॥ पितृगृहेऽसंस्कृतयैवोत्पादितः ॥ ११ ॥ स च पाणिग्राहस्य ॥ १२ ॥ गृहे च गूढोत्पन्नः षष्ठः ॥ १३ ॥ यस्य तल्पजस्तस्यासौ ॥ १४ ॥ सहोढः सप्तमः ॥ १५ ॥ गर्भिणी या संस्क्रियते तस्याः पुत्रः ॥ १६ ॥ स च पाणिग्राहस्य ॥ १७ ॥ दत्तकश्चाष्टमः ॥ १८ ॥ स च मातापितृभ्यां यस्य दत्तः ॥ १९ ॥ क्रीतश्च नवमः ॥ २० ॥ स च येन क्रीतः ॥ २१ ॥ स्वयमुपगतो दशमः ॥ २२ ॥ स च यस्योपगतः ॥ २३ ॥ अपविद्धश्चैकादशः ॥ २४ ॥ पित्रा मात्रा च परित्यक्तः ॥ २५ ॥ स च येन गृहीतः ॥ २६ ॥ यत्र क्वचनोत्पादितश्च द्वादशः ॥ २७ ॥ एतेषां पूर्व्वः श्रेयान् ॥ २८ ॥ स एव दायहरः ॥ २९ ॥ स चान्यान् बिभृयात् ॥ ३० ॥ अनूढानां स्ववित्तानुरूपेण संस्कारं कुर्य्यात् ॥ ३१ ॥ पतितक्लीबाचिकित्स्यरोगविकलास्त्वभागहारिणः ॥ ३२ ॥ रिक्थग्राहिभिस्ते भर्त्तव्याः ॥ ३३ ॥ तेषाञ्चौरसाः पुत्रा भागहारिणः ॥ ३४ ॥ न तु पतितस्य पतनीये कर्म्मणि कृते त्वनन्तरोत्पन्नाः ॥ ३५ ॥ प्रतिलोमासु स्त्रीषु चोत्पन्ना अभागिनः ॥ ३६ ॥ तत्पुत्राः पैतामहेऽप्यर्थे ॥ ३७ ॥ अंशग्राहिभिस्ते भरणीयाः ॥ ३८ ॥ यश्चार्थहरः स पिण्डदायी ॥ ३९ ॥ एकोढानामप्येकस्याः पुत्रः सर्व्वासां पुत्र एव ॥ ४० ॥ भ्रातृणामेकजातानाञ्च ॥ ४१ ॥ पुत्रः पितृवित्ताभावेऽपि पिण्डं दद्यात् ॥ ४२ ॥

पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः ।
तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा ॥ ४३ ॥
ऋणमस्मिन् सन्नयति अमृतत्वञ्च गच्छति ।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥ ४४ ॥
पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते ।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम् ॥ ४५ ॥
पौत्रदौहित्रयोर्लोके विशेषो नोपपद्यते ।
दौहित्रोऽपि ह्यपुत्रं तं सन्तारयति पौत्रवत् ॥ ४६ ॥

इति वैष्णवे धर्म्मशास्त्रे पञ्चदशोऽध्यायः ॥ १५ ॥

---

## षोड़शोऽध्यायः ।

समानवर्णासु पुत्राः सवर्णा भवन्ति ॥१॥ अनुलोमासु मातृवर्णाः ॥२॥ प्रतिलोमास्वार्य्यविगर्हिताः ॥३॥ तत्र वैश्यापुत्रः शूद्रेणायोगवः ॥४॥ पुक्कसमागधौ क्षत्रियापुत्रौ वैश्यशूद्राभ्याम् ॥५॥ चाण्डालवैदेहकसूताश्च ब्राह्मणीपुत्राः शूद्रविट्क्षत्रियैः ॥६॥ सङ्करसङ्कराश्चासङ्ख्येयाः ॥७॥ रङ्गावतरणमायोगवानाम् ॥८॥ व्याधता पुक्कसानाम् ॥९॥ स्तुतिक्रिया मागधानाम् ॥१०॥ वध्यघातित्वं चाण्डालानाम् ॥११॥ स्त्रीरक्षा तज्जीवनञ्च वैदेहकानाम् ॥१२॥ अश्वसारथ्यं सूतानाम् ॥१३॥ चाण्डालानां बहिर्ग्रामनिवसनं मृतचेलधारणमिति विशेषः ॥१४॥ सर्व्वेषाञ्च समानजातिभिर्व्यवहारः ॥१५॥ स्वपितृवित्तानुहरणञ्च ॥१६॥

सङ्करे जातयस्त्वेताः पितृमातृप्रदर्शिताः ।
प्रच्छन्ना वा प्रकाशा वा वेदितव्याः स्वकर्म्मभिः ॥१७
ब्राह्मणार्थे गवार्थे वा देहत्यागोऽनुपस्कृतः ।
स्त्रीबालाभ्युपपत्तौ च बाह्यानां सिद्धिकारणम् ॥१८

इति वैष्णवे धर्म्मशास्त्रे षोड़शोऽध्यायः ॥१६

---

## सप्तदशोऽध्यायः ।

पिता चेत् पुत्रान् विभजेत् तस्य स्वेच्छा स्वयमुपार्जितेऽर्थे ॥१॥ पैतामहे त्वर्थे पितृपुत्रयोस्तुल्यं स्वामित्वम् ॥२॥ पितृविभक्ता विभागानन्तरोत्पन्नस्य भागं दद्युः ॥३॥ अपुत्रधनं पत्न्यभिगामि ॥४॥ तदभावे दुहितृगामि ॥५॥ तदभावे पितृगामि ॥६॥ तदभावे मातृगामि ॥७॥ तदभावे भ्रातृगामि ॥८॥ तदभावे भ्रातृपुत्रगामि ॥९॥ तदभावे बन्धुगामि ॥१०॥ तदभावे सकुल्यगामि ॥११॥ तदभावे सहाध्यायिगामि ॥१२॥ तदभावे ब्राह्मणधनवर्ज्जं राजगामि ॥१३॥ ब्राह्मणार्थो ब्राह्मणानाम् ॥१४॥ वानप्रस्थधनमाचार्य्यो गृह्णीयात् ॥१५॥ शिष्यो वा ॥१६॥

संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः ।
दद्यादपहरेच्चांशं जातस्य च मृतस्य च ॥१७॥
पितृमातृसुतभ्रातृ-दत्तमध्यग्न्युपागतम् ।
आधिवेदनिकं बन्धुदत्तं शुल्कमन्वाधेयकमिति स्त्रीधनम् ॥१८॥ ब्राह्मादिषु चतुर्षु विवाहेष्वप्रजायामतीतायां तद्भर्त्तुः ॥१९॥ शेषेषु च पिता हरेत् ॥२०॥ सर्व्वेष्वेव प्रसूतायां यद्धनं तद्दुहितृगामि ॥२१॥
पत्यौ जीवति यः स्त्रीभिरलङ्कारो धृतो भवेत् ।
न तं भजेरन् दायादाः भजमानाः पतन्ति ते ॥२२
अनेकपितृकाणां तु पितृतो भागकल्पना ।
यस्य यत् पैतृकं रिक्थं स तद्गृह्णीत नेतरः ॥२३

इति वैष्णवे धर्म्मशास्त्रे सप्तदशोऽध्यायः ॥१७॥

---

## अष्टादशोऽध्यायः ।

ब्राह्मणस्य चतुर्षु वर्णेषु चेत् पुत्रा भवेयुस्ते पैतृकमृक्थं दशधा विभजेयुः ॥१॥ तत्र ब्राह्मणीपुत्रश्चतुरोंऽशानादद्यात् ॥२॥ क्षत्रियापुत्रस्त्रीन् ॥३॥ द्वावंशौ वैश्यापुत्रः ॥४॥ शूद्रापुत्रस्त्वेकम् ॥५॥ अथ चेत् शूद्रापुत्रवर्ज्जं ब्राह्मणस्य पुत्रत्रयं भवेत् तदा तद्धनं नवधा विभजेयुः ॥६॥ वर्णानुक्रमेण चतुस्त्रिद्विभागीकृतानंशानादद्युः ॥७॥ वैश्यवर्ज्जमष्टधाकृतं चतुरस्त्रीनेकं चादद्युः ॥८॥ क्षत्रियवर्ज्जं सप्तधाकृतं चतुरो द्वावेकञ्च ॥९॥ ब्राह्मणवर्ज्जं षड्धाकृतं त्रीन् द्वावेकञ्च ॥१०॥ क्षत्रियस्य क्षत्रियावैश्याशूद्रापुत्रेष्वयमेव विभागः ॥११॥ अथ ब्राह्मणस्य ब्राह्मणक्षत्रियौ पुत्रौ स्यातां तदा सप्तधा कृताद्धनाद्ब्राह्मणश्चतुरोंऽशानादद्यात् ॥१२॥ त्रीन् राजन्यः ॥१३॥ अथ ब्राह्मणस्य ब्राह्मणवैश्यौ तदा षड्धाविभक्तस्य चतुरोंऽशान् ब्राह्मण आदद्यात् ॥१४॥ द्वावंशौ वैश्यः ॥१५॥ अथ ब्राह्मणस्य ब्राह्मणशूद्रौ पुत्रौ स्यातां तद्धनं पञ्चधा विभजेयाताम् ॥१६॥ चतुरोंऽशान्

## विंशोऽध्यायः।

यदुत्तरायणं तदहर्देवानाम् ॥ १ ॥ दक्षिणायनं रात्रिः ॥ २ ॥ संवत्सरोऽहोरात्रः ॥ ३ ॥ तत्त्रिंशता मासः ॥ ४ ॥ मासा द्वादश वर्षम् ॥ ५ ॥ द्वादशवर्षशतानि दिव्यानि कलियुगम् ॥ ६ ॥ द्विगुणानि द्वापरम् ॥ ७ ॥ त्रिगुणानि त्रेता ॥ ८ ॥ चतुर्गुणानि कृतयुगम् ॥ ९ ॥ द्वादशवर्षसहस्राणि दिव्यानि चतुर्युगम् ॥ १० ॥ चतुर्युगाणामेकसप्ततिर्मन्वन्तरम् ॥ ११ ॥ चतुर्युगसहस्रं कल्पः ॥ १२ ॥ स च पितामहस्याहः ॥ १३ ॥ तावती चास्य रात्रिः ॥ १४ ॥ एवंविधेनाहोरात्रेण मासवर्षगणनया सर्वस्यैव ब्रह्मणो वर्षशतमायुः ॥ १५ ॥ ब्रह्मायुषा च परिच्छिन्नः पौरुषो दिवसः ॥ १६ ॥ तस्यान्ते महाकल्पः ॥ १७ ॥ तावत्येवास्य निशा ॥ १८ ॥ पौरुषाणामहोरात्राणामतीतानां सङ्ख्यैव नास्ति ॥ १९ ॥ न च भविष्याणाम् ॥ २० ॥ अनाद्यन्तत्वात् कालस्य ॥ २१ ॥

एवमस्मिन् निरालम्बे काले सततयायिनि।
न तद्भूतं प्रपश्यामि स्थितिर्यस्य भवेद्ध्रुवा ॥ २२
गङ्गायाः सिकताधारास्तथा वर्षति वासवे।
शक्या गणयितुं लोके न व्यतीताः पितामहाः ॥ २३
चतुर्दश विनश्यन्ति कल्पे कल्पे सुरेश्वराः।
सर्वलोकप्रधानाश्च मनवश्च चतुर्दश ॥ २४
बहूनीन्द्रसहस्राणि दैत्येन्द्रनियुतानि च।
विनष्टानीह कालेन मनुजेष्वथ का कथा ॥ २५
राजर्षयश्च बहवः सर्वे समुदिता गुणैः।
देवा ब्रह्मर्षयश्चैव कालेन निधनं गताः ॥ २६
ये समर्था जगत्यस्मिन् सृष्टिसंहारकारिणः।
तेऽपि कालेन लीयन्ते कालो हि बलवत्तरः ॥ २७
आक्रान्तः सर्वः कालेन परलोकञ्च नीयते।
कर्म्मपाशवशो जन्तुः का तत्र परिदेवना ॥ २८
जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च।
अर्थे दुष्परिहार्य्येऽस्मिन् नास्ति लोके सहायता ॥ २९
शोचन्तो नोपकुर्व्वन्ति मृतस्येह जना यतः।
अतो न रोदितव्यं हि क्रियाः कार्य्याः स्वशक्तितः ॥ ३०
सुकृतं दुष्कृतञ्चोभौ सहायौ यस्य गच्छतः।
बान्धवैस्तस्य किं कार्य्यं शोचद्भिरथवा न वा ॥ ३१
बान्धवानामशौचे तु स्थितिं प्रेतो न विन्दति।
अतस्तानभ्येति तानेव पिण्डतोयप्रदायिनः ॥ ३२
अर्व्वाक् सपिण्डीकरणात् प्रेतो भवति यो मृतः।
प्रेतलोकगतस्यान्नं सोदकुम्भं प्रयच्छत ॥ ३३
पितृलोकगतस्त्वान्नं श्राद्धे भुङ्क्ते स्वधामयम्।
पितृलोकगतस्यास्य तस्माच्छ्राद्धं प्रयच्छत ॥ ३४
देवत्वे यातनास्थाने तिर्य्यग्योनौ तथैव च।
मानुष्ये च तथाप्नोति श्राद्धं दत्तं स्वबान्धवैः ॥ ३५
प्रेतस्य श्राद्धकर्त्तुश्च पुष्टिःश्राद्धे कृते ध्रुवम्।
तस्माच्छ्राद्धं सदा कार्य्यं शोकं त्यक्त्वा निरर्थकम् ॥ ३६
एतावदेव कर्त्तव्यं सदा प्रेतस्य बन्धुभिः।
नोपकुर्य्यान्नरः शोकात् प्रेतस्यात्मन एव वा ॥ ३७
दृष्ट्वा लोकमनाक्रन्दं म्रियमाणांश्च बान्धवान्।
धर्म्ममेकं सहायार्थं वरयध्वं सदा नराः ॥ ३८
मृतोऽपि बान्धवः शक्तो नानुगन्तुं नरं मृतम्।
जायावर्ज्जं हि सर्व्वस्य याम्यः पन्था विरुध्यते ॥ ३९
धर्म्म एकोऽनुयात्येनं यत्र क्वचन गामिनम्।
निःसारे नृलोकेऽस्मिन् धर्म्मं कुरुत मा चिरम् ॥ ४०
श्वःकार्य्यमद्य कुर्व्वीत पूर्व्वाह्णे चापराह्णिकम्।
न हि प्रतीक्षते मृत्युः कृतं वास्य न वाकृतम् ॥ ४१
क्षेत्रापणगृहासक्तमन्यत्रगतमानसम्।
वृकीवोरणमासाद्य मृत्युरादाय गच्छति ॥ ४२
न कालस्य प्रियः कश्चिद् द्वेष्यश्चास्य न विद्यते।
आयुष्ये कर्म्मणि क्षीणे प्रसह्य हरते जनम् ॥ ४३
नाप्राप्तकालो म्रियते विद्धः शरशतैरपि।
कुशाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति ॥ ४४
नौषधानि न मन्त्राश्च न होमा न पुनर्जपाः।
त्रायन्ते मृत्युनोपेतं जरया वापि मानवम् ॥ ४५
आगामिनमनर्थं हि प्रतिविधानशतैरपि।
न निवारयितुं शक्तस्तत्र का परिदेवना ॥ ४६

यथा धेनुसहस्रेषु वत्सो विन्दति मातरम्।
तथा पूर्व्वकृतं कर्म्म कर्त्तारं विन्दते ध्रुवम्॥ ४७
अव्यक्तादीनि भूतानि व्यक्तमध्यानि चाप्यथ।
अव्यक्तनिधनान्येव तत्र का परिदेवना॥ ४८
देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति॥ ४९
गृह्णातीह यथा वस्त्रं त्यक्त्वा पूर्व्वधृताम्बरम्।
गृह्णात्येवं नवं देहं देही कर्म्मनिबन्धनम्॥ ५०
नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः॥ ५१
अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च।
नित्यः सततगः स्थाणुरचलोऽयं सनातनः॥ ५२
अव्यक्तोऽयमचिन्त्योऽयमविकार्य्योऽयमुच्यते।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हथ॥ ५३

इति वैष्णवे धर्म्मशास्त्रे विंशोऽध्यायः॥ २०॥

---

## एकविंशोऽध्यायः।

अथाशौचव्यपगमे सुस्नातः सुप्रक्षालितपाणिपादः स्वाचान्तस्त्वेवंविधान् ब्राह्मणान् यथाशक्त्युदङ्मुखान् गन्धमाल्य-वस्त्रालङ्कारादिभिः पूजितान् भोजयेत्॥ १॥ एकवन्मन्त्रानूहेतैकोद्दिष्टे॥ २॥ उच्छिष्टसन्निधावेकमेव तन्नामगोत्राभ्यां पिण्डं निर्व्वपेत्॥ ३॥ भुक्तवत्सु ब्राह्मणेषु दक्षिणाभिपूजितेषु प्रेतनामगोत्राभ्यां दत्ताक्षय्योदकश्चतुरङ्गुल-पृथ्वीस्तावदन्तरास्तावदधःखाता वितस्त्यायतास्तिस्रः कर्षूः कुर्य्यात्॥ ४॥ कर्षूसमीपे चाग्नित्रयमुपसमाधाय परिस्तीर्य्य तत्रैकैकस्मिन्नाहुतित्रयं जुहुयात्॥ ५॥ सोमाय पितृमते स्वधा नमः॥ ६॥ अग्नये कव्यवाहनाय स्वधा नमः॥ ७॥ यमायाङ्गिरसे स्वधा नमः॥ ८॥ स्थानत्रये च प्राग्वत् पिण्डनिर्व्वपणं कुर्य्यात्॥ ९॥ अन्नदधिमधुमांसैः कर्षूत्रयं पूरयित्वैतत्त इति जपेत्॥ १०॥ एवं मृताहे प्रतिमासं कुर्य्यात्॥ ११॥ संवत्सरान्ते प्रेताय तत्पित्रे तत्पितामहाय तत्प्रपितामहाय च ब्राह्मणान् देवपूर्व्वान् भोजयेत्॥ १२॥ अत्राग्नौकरणमावाहनं पाद्यञ्च कुर्य्यात्॥ १३॥ संसृजतु त्वा पृथिवी समानीव इति च प्रेतपाद्यपात्रे पितृपाद्यपात्रत्रये योजयेत्॥ १४॥ उच्छिष्टसन्निधौ पिण्डचतुष्टयं कुर्य्यात्॥ १५॥ ब्राह्मणांश्च स्वाचान्तान् दत्तदक्षिणांश्चानुव्रज्य विसर्ज्जयेत्॥ १६॥ ततः प्रेतपिण्डं पाद्यपात्रोदकवत् पिण्डत्रये निदध्यात्॥ १७॥ कर्षूत्रयञ्चैवमेव॥ १८॥ सपिण्डीकरणं मासिकार्थवद्द्वादशाहे श्राद्धं कृत्वा त्रयोदशेऽह्नि वा कुर्य्यात्॥ १९॥ मन्त्रवर्ज्जं हि शूद्राणां द्वादशेऽह्नि॥ २०॥ संवत्सराभ्यन्तरे यद्यधिमासो भवेत् तदा मासिकार्थे दिनमेकं वर्द्धयेत्॥ २१॥

सपिण्डीकरणं स्त्रीणां कार्य्यमेवं तथा भवेत्।
यावज्जीवं तथा कुर्य्याच्छ्राद्धन्तु प्रतिवत्सरम्॥ २२॥
अर्व्वाक् सपिण्डीकरणं यस्य संवत्सरात् कृतम्।
तस्याप्यन्नं सोदकुम्भं दद्याद्वर्षं द्विजन्मने॥ २३॥

इति वैष्णवे धर्म्मशास्त्रे एकविंशोऽध्यायः॥ २१॥

---

## द्वाविंशोऽध्यायः।

ब्राह्मणस्य सपिण्डानां जननमरणयोर्दशाहमाशौचम्॥ १॥ द्वादशाहं राजन्यस्य॥ २॥ मासं शूद्रस्य सपिण्डता च पुरुषे सप्तमे विनिवर्त्तते॥ ४॥ अशौचे होमदानप्रतिग्रहस्वाध्याया निवर्त्तन्ते॥ ५॥ नाशौचे कस्यचिदन्नमश्नीयात्॥ ६॥ ब्राह्मणादीनामशौचे यः सकृदेवान्नमश्नाति तस्य तावदशौचं यावत् तेषाम्॥ ७॥ अशौचापगमे प्रायश्चित्तं कुर्य्यात्॥ ८॥ सवर्णस्याशौचे द्विजो भुक्त्वा स्रवन्तीमासाद्य तन्निमग्नस्त्रिरघमर्षणं जप्त्वोत्थाय गायत्र्यष्टसहस्रं जपेत्॥ ९॥ क्षत्रियाशौचे ब्राह्मणस्तदेवोपोषितः कृत्वा शुध्यति॥ १०॥ वैश्याशौचे राजन्यश्च॥ ११॥ ब्राह्मणस्त्रिरात्रोपोषितश्च॥ १२॥ ब्राह्मणाशौचे राजन्य

दण्डं प्रक्षाल्य शुध्यति ॥ ७६ ॥ अन्नमोपहतो मृत्तोयैस्तदङ्गं प्रक्षाल्य स्नानेन ॥ ७७ ॥ वस्त्रोपहतस्तदुपोष्य स्नात्वा पञ्चगव्येन ॥ ७८ ॥ श्मशानकर्दमोपहतश्च ॥ ७९ ॥

वसा शुक्रमसृङ्मज्जा मूत्रविट्कर्णविण्नखाः ।
श्लेष्माश्रु दूषिका स्वेदो द्वादशैते नृणां मलाः ॥ ८०
गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा ।
यथैवैका तथा सर्व्वा न पातव्या द्विजातिभिः ॥ ८१
माधूकमैक्षवं टाङ्कं कौलं खार्ज्जूरपानसे ।
मृद्वीकारस-माध्वीके मैरेयं नारिकेलजम् ॥ ८२
अमेध्यानि दशैतानि मद्यानि ब्राह्मणस्य च ।
राजन्यश्चैव वैश्यश्च स्पृष्ट्वैतानि न दुष्यतः ॥ ८३
गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन् ।
प्रेताहारैः समं तत्र दशरात्रेण शुध्यति ॥ ८४
आचार्य्यं स्वमुपाध्यायं पितरं मातरं गुरुम् ।
निर्हृत्य तु व्रती प्रेतान्न व्रतेन वियुज्यते ॥ ८५
आदिष्टी नोदकं कुर्य्यादा व्रतस्य समापनात् ।
समाप्ते तूदकं कृत्वा त्रिरात्रेण विशुध्यति ॥ ८६
ज्ञानं तपोऽग्निराहारो मृन्मनो वार्य्युपाञ्जनम् ।
वायुः कर्म्मार्ककालौ च शुद्धिकर्तॄणि देहिनाम् ॥ ८७
सर्व्वेषामेव शौचानामन्नशौचं परं स्मृतम् ।
योऽन्ने शुचिः स हि शुचिर्न मृद्वारिशुचिः शुचिः ॥ ८८
क्षान्त्या शुध्यन्ति विद्वांसो दानेनाकार्य्यकारिणः ।
प्रच्छन्नपापा जप्येन तपसा वेदवित्तमाः ॥ ८९
मृत्तोयैः शुध्यते शोध्यं नदी वेगेन शुध्यति ।
रजसा स्त्री मनोदुष्टा सन्न्यासेन द्विजोत्तमाः ॥ ९०
अद्भिर्गात्राणि शुध्यन्ति मनः सत्येन शुध्यति ।
विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुध्यति ॥ ९१
एष शौचस्य ते प्रोक्तः शारीरस्य विनिर्णयः ।
नानाविधानां द्रव्याणां शुद्धेः शृणु विनिर्णयम् ॥ ९२

इति वैष्णवे धर्म्मशास्त्रे द्वाविंशोऽध्यायः ॥ २२ ॥

---

## त्रयोविंशोऽध्यायः ।

शारीरैर्मलैः सुराभिर्म्मद्यैर्वा यदुपहतं तदत्यन्तोपहतम् ॥ १ ॥ अत्यन्तोपहतं सर्व्वं लौहभाण्डमग्नौ प्रक्षिप्तं शुध्येत् ॥ २ ॥ मणिमयमश्ममयमब्जं च सप्तरात्रं महीनिखननेन ॥ ३ ॥ शृङ्गदन्तास्थिमयं तक्षणेन ॥ ४ ॥ दारवं मृन्मयं च जह्यात् ॥ ५ ॥ अत्यन्तोपहतस्य वस्त्रस्य यत् प्रक्षालितं सद्विरज्येत तच्छिन्द्यात् ॥ ६ ॥ सौवर्ण-राजताब्ज-मणिमयानां निर्लेपानामद्भिः शुद्धिः ॥ ७ ॥ अश्ममयानां चमसानां ग्रहाणां च ॥ ८ ॥ चरुस्रुक्स्रुवाणामुष्णाम्भसा ॥ ९ ॥ यज्ञकर्म्मणि यज्ञपात्राणां पाणिना सम्मार्ज्जनेन ॥ १० ॥ स्फ्यशूर्पशकटमुसलोलूखलानां प्रोक्षणेन ॥ ११ ॥ शयनयानासनानां च ॥ १२ ॥ बहूनां च ॥ १३ ॥ धान्याजिनरज्जुतान्तववैदलसूत्रकार्पासवाससां च ॥ १४ ॥ शाकमूलफलपुष्पाणां च ॥ १५ ॥ तृणकाष्ठशुष्कपलाशानां च ॥ १६ ॥ एतेषां प्रक्षालनेन ॥ १७ ॥ अल्पानां च ॥ १८ ॥ अपः कौषेयाविकयोः ॥ १९ ॥ अरिष्टकैः कुतपानाम् ॥ २० ॥ श्रीफलैरंशुपट्टानाम् ॥ २१ ॥ गौरसर्षपैः क्षौमाणाम् ॥ २२ ॥ शृङ्गास्थिदन्तमयानां च ॥ २३ ॥ पद्माक्षैर्गालोमिकानाम् ॥ २४ ॥ ताम्ररीतित्रपुसीसमयानामम्लोदकेन ॥ २५ ॥ भस्मना कांस्यलोहयोः ॥ २६ ॥ तक्षणेन दारवाणाम् ॥ २७ ॥ गोवालैः फलसम्भवानाम् ॥ २८ ॥ प्रोक्षणेन संहतानाम् ॥ २९ ॥ उत्पवनेन द्रवाणाम् ॥ ३० ॥ गुडादीनामिक्षुविकाराणां प्रभूतानां गृहनिहितानां वार्य्यग्निदानेन ॥ ३१ ॥ सर्व्वलवणानां च ॥ ३२ ॥ पुनःपाकेन मृन्मयानाम् ॥ ३३ ॥ द्रव्यवत् कृतशौचानां देवतार्च्चानां भूयः प्रतिष्ठापनेन ॥ ३४ ॥ अकृतान्नस्य यावन्मात्रमुपहतं तन्मात्रं परित्यज्य शेषस्य कण्डनप्रक्षालने कुर्य्यात् ॥ ३५ ॥ द्रोणाभ्यधिकं सिद्धमन्नमुपहतं न दुष्यति ॥ ३६ ॥ तस्योपहतमात्रमपास्य गायत्र्या-

विषमन्वितं सुवर्णाम्भः प्रक्षिपेत् । वस्तस्य प्रदग्धैष-
चकं मेष ॥ ३७ ॥

यत्तु विजग्धं गवाघ्रातमवधूतमवक्षुतम् ।
दूषितं केशकीटैश्च मृत्प्रक्षेपेण शुध्यति ॥ ३८
यावन्नापैत्यमेध्याक्ताद्गन्धो लेपश्च तत्कृतः ।
तावन्मृद्वारि देयं स्यात् सर्व्वासु द्रव्यशुद्धिषु ॥ ३९
अजाश्वं मुखतो मेध्यं न गौर्न नरजा मलाः ।
पन्थानश्च विशुध्यन्ति सोमसूर्य्यांशुमारुतैः ॥ ४०
रथ्याकर्द्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः ।
मारुतेनैव शुध्यन्ति पक्वेष्टकचितानि च ॥ ४१
...सर्व्वासां मृद्भिरद्भिश्च कारयेत् ।
...अत्यन्तोपहतानां च शौचं नित्यमतन्द्रितः ॥ ४२
...भूमिष्ठमुदकं पुण्यं वैतृष्ण्यं यत्र गोर्भवेत् ।
...अव्याप्तश्चेदमेध्येन तद्वदेव शिलागतम् ॥ ४३
...दृष्टतपञ्चनखात् कूपादत्यन्तोपहतात् तथा ।
अपः समुद्धरेत् सर्व्वाः शेषं वस्त्रेण शोधयेत् ॥ ४४
वह्निप्रज्वालनं कुर्य्यात् कूपे पक्वेष्टकाचिते ।
पञ्चगव्यं न्यसेत् पश्चान्नवतोयसमुद्भवे ॥ ४५
जलाशयेष्वथाल्पेषु स्थावरेषु वसुन्धरे ।
कूपवत् कथिता शुद्धिर्महत्सु च न दूषणम् ॥ ४६
त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन् ।
अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ॥ ४७
नित्यं शुद्धः कारुहस्तः पण्यं यच्च प्रसारितम् ।
ब्राह्मणान्तरितं भैक्ष्यमाकराः सर्व्व एव च ॥ ४८
नित्यमास्यं शुचि स्त्रीणां शकुनिः फलपातने ।
प्रस्रवे च शुचिर्वत्सः श्वा मृगग्रहणे शुचिः ॥ ४९
श्वभिर्हतस्य यन्मांसं शुचि तत् परिकीर्त्तितम् ।
क्रव्याद्भिश्च हतस्यान्यैश्चाण्डालाद्यैश्च दस्युभिः ॥ ५०
ऊर्द्ध्वं नाभेर्यानि खानि तानि मेध्यानि निर्द्दिशेत् ।
यान्यधस्तान्यमेध्यानि देहाच्चैव मलाश्च्युताः ॥ ५१
मक्षिका विप्रुषश्छाया गौर्गजाश्वमरीचयः ।
रजो भूर्व्वायुरग्निश्च मार्ज्जारश्च सदा शुचिः ॥ ५२
नोच्छिष्टं कुर्व्वते मुख्या विप्रुषोऽङ्गं पतन्ति याः ।
न श्मश्रूणि गतान्यास्यं न दन्तान्तरवेष्टितम् ॥ ५३
स्पृशन्ति बिन्दवः पादौ य आचामयतः परान् ।
भौमिकैस्ते समा ज्ञेया न तैरप्रयतो भवेत् ॥ ५४
उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तः कथञ्चन ।
अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात् ॥ ५५
मार्ज्जनोपाञ्जनैर्वेश्म प्रोक्षणेन च पुस्तकम् ।
सम्मार्ज्जनेनाञ्जनेन सेकेनोल्लेखनेन च ॥ ५६
दाहेन च भुवः शुद्धिर्व्वासेनाप्यथवा गवाम् ।
गावः पवित्रं मङ्गल्यं गोषु लोकाः प्रतिष्ठिताः ॥ ५७
गावो वितन्वते यज्ञं गावः सर्व्वाघसूदनाः ।
गोमूत्रं गोमयं सर्पिः क्षीरं दधि च रोचना ॥ ५८
षडङ्गमेतत् परमं मङ्गल्यं सर्व्वदा गवाम् ।
शृङ्गोदकं गवां पुण्यं सर्व्वाघविनिसूदनम् ॥ ५९
गवां कण्डूयनञ्चैव सर्व्वकल्मषनाशनम् ।
गवां ग्रासप्रदानेन स्वर्गलोके महीयते ॥ ६०

गवां हि तीर्थे वसतीह गङ्गा
पुष्टिस्तथासां रजसि प्रवृद्धा ।
लक्ष्मीः करीषे प्रणतौ च धर्म्म-
स्तासां प्रणामं सततञ्च कुर्य्यात् ॥ ६१

इति वैष्णवे धर्म्मशास्त्रे त्रयोविंशोऽध्यायः ॥ २३ ॥

---

## चतुर्व्विंशोऽध्यायः ।

अथ ब्राह्मणस्य वर्णानुक्रमेण चतस्रो भार्य्या भवन्ति ॥ १ ॥ तिस्रः क्षत्रियस्य ॥ २ ॥ द्वे वैश्यस्य ॥ ३ ॥ एका शूद्रस्य ॥ ४ ॥ तासां सवर्णावेदने पाणिर्ग्राह्यः ॥ ५ ॥ असवर्णावेदने शरः क्षत्रियकन्यया ॥ ६ ॥ प्रतोदो वैश्यकन्यया ॥ ७ ॥ वसनदशान्तः शूद्रकन्यया ॥ ८ ॥ न सगोत्रां न समानार्षप्रवरां भार्य्यां विन्देत ॥ ९ ॥ मातृतस्त्वापञ्चमात् पुरुषात् पितृतश्चासप्तमात् ॥ १ ॥ नाकुलीनाम् ॥ ११ ॥ न च व्याधिताम् ॥ १२ ॥ नाधिकाङ्गीम् ॥ १३ ॥ न हीनाङ्गीम् ॥ १४ ॥ नातिकपिलाम् ॥ १५ ॥ न वाचाटाम् ॥ १६ ॥ अथाष्टौ विवाहा भवन्ति ॥ १७ ॥ ब्राह्मो दैव आर्षः प्राजापत्यो

गान्धर्व्व आसुरो राक्षसः पैशाचश्चेति ॥ १८ ॥ तत्र गुणवते कन्याप्रदानं ब्राह्मः ॥ १९ ॥ यज्ञस्थ-ऋत्विजे दैवः ॥ २० ॥ गोमिथुनग्रहणेनार्षः ॥ २१ ॥ प्रार्थितप्रदानेन प्राजापत्यः ॥ २२ ॥ सका-मयोर्मातापितृरहितो योगो गान्धर्व्वः ॥ २३ ॥ क्रयेणासुरः ॥ २४ ॥ युद्धहरणेन राक्षसः ॥ २५ ॥ सुप्तप्रमत्ताभिगमनात् पैशाचः ॥ २६ ॥ एतेष्वाद्या-श्चत्वारो धर्म्याः ॥ २७ ॥ गान्धर्व्वोऽपि राजन्यानाम् ॥ २८ ॥ ब्राह्मपुत्रः पुरुषानेकविंशतिं पुनीते ॥ २९ ॥ दैवपुत्रश्चतुर्द्दश ॥ ३० ॥ आर्षपुत्रः सप्त ॥ ३१ ॥ प्राजापत्यश्चतुरः ॥ ३२ ॥ ब्राह्मेण विवाहेन कन्यां ददद्ब्रह्मलोकं गमयति ॥ ३३ ॥ दैवेन स्वर्गम् ॥ ३४ ॥ आर्षेण वैष्णवम् ॥ ३५ ॥ प्राजापत्येन देव-लोकम् ॥ ३६ ॥ गान्धर्व्वेण गन्धर्व्वलोकं गच्छति ॥ ३७ ॥ पिता पितामहो भ्राता सकुल्यो मातामहो माता चेति कन्याप्रदाः ॥ ३८ ॥ पूर्व्वाभावे प्रकृतिस्थः परः परः ॥ ३९ ॥

ऋतुत्रयस्मुपास्यैव कन्या कुर्य्यात् स्वयंवरम् ।
ऋतुत्रये व्यतीते तु प्रभवत्यात्मनः सदा ॥ ४० ॥
पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता ।
सा कन्या वृषली ज्ञेया हरंस्तां न विदुष्यति ॥ ४१ ॥

इति वैष्णवे धर्म्मशास्त्रे चतुर्व्विंशोऽध्यायः ॥ २४ ॥

---

## पञ्चविंशोऽध्यायः ।

अथ स्त्रीणां धर्म्माः ॥ १ ॥ भर्त्तुः समानव्रत-चारित्वम् ॥ २ ॥ श्वश्रूश्वशुरगुरुदेवतातिथिपूजनम् ॥ ३ ॥ सुसंस्कृतोपस्करता ॥ ४ ॥ अमुक्तहस्तता ॥ ५ ॥ सुगुप्तभाण्डता ॥ ६ ॥ मूलक्रियास्वनभिरतिः ॥ ७ ॥ मङ्गलाचारतत्परता ॥ ८ ॥ भर्त्तरि प्रवसिते-ऽप्रतिकर्म्मक्रिया ॥ ९ ॥ परगृहेष्वनभिगमनम् ॥ १० ॥ द्वारदेशगवाक्षकेष्वनवस्थानम् ॥ ११ ॥ सर्व्वकर्म्म-स्वस्वतन्त्रता ॥ १२ ॥ बाल्ययौवनवार्द्धकेष्वपि पितृ-भर्त्तृपुत्राधीनता ॥ १३ ॥ मृते भर्त्तरि ब्रह्मचर्य्यं तदन्वारोहणं वा ॥ १४ ॥

नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषितम् ।
पतिं शुश्रूषते यत्तु तेन स्वर्गे महीयते ॥ १५ ॥
पत्यौ जीवति या योषिदुपवासव्रतं चरेत् ।
आयुः सा हरते भर्त्तुर्नरकञ्चैव गच्छति ॥ १६ ॥
मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्ये व्यवस्थिता ।
स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः ॥ १७ ॥

इति वैष्णवे धर्म्मशास्त्रे पञ्चविंशोऽध्यायः ॥

---

## षड्विंशोऽध्यायः ।

सवर्णासु बहुभार्य्यासु विद्यमानासु ज्येष्ठया धर्म्मकार्य्यं कुर्य्यात् ॥ १ ॥ मिश्रासु च कनिष्ठया समानवर्णया ॥ २ ॥ समानवर्णाया अभावे त्वनन्तरयैवापदि च ॥ ३ ॥ न त्वेव द्विजः शूद्रया ॥ ४ ॥

द्विजस्य भार्य्या शूद्रा तु धर्म्मार्थं न भवेत् क्वचित् ।
रत्यर्थमेव सा तस्य रागान्धस्य प्रकीर्त्तिता ॥ ५ ॥
हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः ।
कुलान्येव नयन्त्याशु ससन्तानानि शूद्रताम् ॥ ६ ॥
दैवपित्र्यातिथेयानि तत्प्रधानानि यस्य तु ।
नाश्नन्ति पितृदेवास्तु न च स्वर्गं स गच्छति ॥ ७ ॥

इति वैष्णवे धर्म्मशास्त्रे षड्विंशोऽध्यायः ॥ २६ ॥

---

## सप्तविंशोऽध्यायः ।

गर्भस्य स्पष्टताज्ञाने निषेककर्म्म ॥ १ ॥ स्पन्दनात् प्राक् पुंसवनम् ॥ २ ॥ षष्ठेऽष्टमे वा सीमन्तोन्नयनम् ॥ ३ ॥ जाते च दारके जातकर्म्म ॥ ४ ॥ आशौचव्यपगमे नामधेयम् ॥ ५ ॥ माङ्गल्यं ब्राह्मणस्य ॥ ६ ॥ बलवत् क्षत्रियस्य ॥ ७ ॥ धनोपेतं वैश्यस्य ॥ ८ ॥ जुगुप्सितं शूद्रस्य ॥ ९ ॥ चतुर्थे मास्यादित्य-दर्शनम् ॥ १० ॥ षष्ठेऽन्नप्राशनम् ॥ ११ ॥ तृतीये-ऽब्दे चूडाकरणम् ॥ १२ ॥ एताश्च क्रियाः स्त्रीणाममन्त्रकाः ॥ १३ ॥ तासां समन्त्रको विवाहः ॥ १४ ॥ गर्भाष्टमेऽब्दे ब्राह्मणस्योपनयनम् ॥ १५

तदादानमस्य ब्रह्मस्तेयं नरकाय भवति ॥ ४२ ॥
लौकिकं वैदिकं वापि तथाध्यात्मिकमेव वा ।
आददीत यतो ज्ञानं न तं द्रुह्येत् कदाचन ॥ ४३
उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता ।
ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम् ॥ ४४
कामान्माता पिता चैनं यदुत्पादयतो मिथः ।
सम्भूतिं तस्य तां विद्याद्यद्योनावभिजायते ॥ ४५
आचार्य्यस्त्वस्य यां जातिं विधिवद्वेदपारगः ।
उत्पादयति सावित्र्या सा सत्या साजरामरा ॥ ४६

य आवृणोत्यवितथेन कर्णा-
वदुःखं कुर्व्वन्नमृतं संप्रयच्छन् ।
तं वै मन्येत पितरं मातरञ्च
तस्मै न द्रुह्येत् कृतमस्य जानन् ॥ ४७

इति वैष्णवे धर्म्मशास्त्रे त्रिंशोऽध्यायः ॥ ३० ॥

---

## एकत्रिंशोऽध्यायः ।

त्रयः पुरुषस्यातिगुरवो भवन्ति ॥ १ ॥ माता पिता आचार्य्यश्च ॥ २ ॥ तेषां नित्यमेव शुश्रूषुणा भवितव्यम् ॥ ३ ॥ यत् ते ब्रूयुस्तत् कुर्य्यात् ॥ ४ ॥ तेषां प्रियहितमाचरेत् ॥ ५ ॥ न तैरननुज्ञातः किञ्चिदपि कुर्य्यात् ॥ ६ ॥

एत एव त्रयो वेदा एत एव त्रयः सुराः ।
एत एव त्रयो लोका एत एव त्रयोऽग्नयः ॥ ७

पिता गार्हपत्योऽग्निर्दक्षिणाग्निर्माता गुरुराहवनीयः ॥ ८ ॥

सर्व्वे तस्यादृता धर्म्मा यस्यैते त्रय आदृताः ।
अनादृतास्तु यस्यैते सर्व्वास्तस्याफलाः क्रियाः ॥ ९ ॥
इमं लोकं मातृभक्त्या पितृभक्त्या तु मध्यमम् ।
गुरुशुश्रूषया त्वेवं ब्रह्मलोकं समश्नुते ॥ १० ॥

इति वैष्णवे धर्म्मशास्त्रे एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

## द्वात्रिंशोऽध्यायः ।

राजर्त्विक्श्रोत्रियाधर्म्मप्रतिषेद्ध्रुपाध्यायपितृव्यमातामहमातुलश्वशुरज्येष्ठभ्रातृसम्बन्धिनश्चाचार्य्यवत् ॥ १ ॥ पत्न्यश्चैतेषां सवर्णाः ॥ २ ॥ मातृष्वसा पितृष्वसा ज्येष्ठा स्वसा च ॥ ३ ॥ श्वशुरपितृव्यमातुलर्त्विजां कनीयसां प्रत्युत्थानमेवाभिवादनम् ॥ ४ ॥ हीनवर्णानां गुरुपत्नीनां दूरादभिवादनं न पादोपसंस्पर्शनम् ॥ ५ ॥ गुरुपत्नीनां गात्रोत्सादनाञ्जनकेशसंयमनपादप्रक्षालनादीनि न कुर्य्यात् ॥ ६ ॥ असंस्तुतापि परपत्नी भगिनीति वाच्या पुत्रीति मातेति वा ॥ ७ ॥ न च गुरुं त्वमिति ब्रूयात् ॥ ८ ॥ तदतिक्रमे निराहारो दिवसान्तं तं प्रसाद्याश्नीयात् ॥ ९ ॥ न च गुरुणा सह विगृह्य कथां कुर्य्यात् ॥ १० ॥ नैव चास्य परीवादम् ॥ ११ ॥ न चानभिप्रेतम् ॥ १२ ॥

गुरुपत्नी तु युवतिर्नाभिवाद्येह पादयोः ।
पूर्णविंशतिवर्षेण गुणदोषौ विजानता ॥ १३
कामन्तु गुरुपत्नीनां युवतीनां युवा भुवि ।
विधिवद्वन्दनं कुर्य्यादसावहमिति ब्रुवन् ॥ १४
विप्रोष्य पादग्रहणमन्वहञ्चाभिवादनम् ।
गुरुदारेषु कुर्व्वीत सतां धर्म्ममनुस्मरन् ॥ १५
वित्तं बन्धुर्व्वयः कर्म्म विद्या भवति पञ्चमी ।
एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम् ॥ १६
ब्राह्मणं दशवर्षञ्च शतवर्षञ्च भूमिपम् ।
पितापुत्रौ विजानीयाद्ब्राह्मणस्तु तयोः पिता ॥ १७
विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणान्तु वीर्य्यतः ।
वैश्यानां धान्यधनतः शूद्राणामेव जन्मतः ॥ १८

इति वैष्णवे धर्म्मशास्त्रे द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

## त्रयस्त्रिंशोऽध्यायः ।

अथ पुरुषस्य कामक्रोधलोभाख्यं रिपुत्रयं सुघोरं भवति ॥ १ ॥ परिग्रहप्रसङ्गाद्विशेषेण गृहाश्रमिणः ॥ २ ॥ तैरयमाक्रान्तोऽतिपातकमहा-

पातकानुपातकोपपातकेषु प्रवर्त्तन्ते ॥ ३ ॥ जातिभ्रंशकरेषु सङ्करीकरणेष्वपात्रीकरणेषु च ॥ ४ ॥ मलावहेषु प्रकीर्णकेषु च ॥ ५ ॥

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ ६

इति वैष्णवे धर्म्मशास्त्रे त्रयस्त्रिंशोऽध्यायः ॥३३॥

---

## चतुस्त्रिंशोऽध्यायः ।

मातृगमनं दुहितृगमनं स्नुषागमनमित्यतिपातकानि ॥ १ ॥

अतिपातकिनस्त्वेते प्रविशेयुर्हुताशनम् ।
न ह्यन्या निष्कृतिस्तेषां विद्यते हि कथञ्चन ॥ २

इति वैष्णवे धर्म्मशास्त्रे चतुस्त्रिंशोऽध्यायः ॥३४॥

---

## पञ्चत्रिंशोऽध्यायः ।

ब्रह्महत्या सुरापानं ब्राह्मणसुवर्णहरणं गुरुदारगमनमिति महापातकानि ॥ १ ॥ तत्संयोगश्च ॥ २ ॥ संवत्सरेण पतति पतितेन सह चरन् ॥ ३ ॥ एकयानभोजनासनशयनैः ॥ ४ ॥ यौनस्रौवमौखसम्बन्धात् सद्य एव ॥ ५ ॥

अश्वमेधेन शुध्येयुर्म्महापातकिनस्त्विमे ।
पृथिव्यां सर्व्वतीर्थानां तथानुसरणेन वा ॥ ६ ॥

इति वैष्णवे धर्म्मशास्त्रे पञ्चत्रिंशोऽध्यायः ॥३५॥

---

## षट्त्रिंशोऽध्यायः ।

याज्ञस्थस्य क्षत्रियस्य वैश्यस्य च रजस्वलायाश्चान्तर्व्वत्न्याश्चात्रिगोत्रायाश्चाविज्ञातस्य गर्भस्य शरणागतस्य च घातनं ब्रह्महत्यासमानीति ॥ १ ॥ कौटसाक्ष्यं सुहृद्वध एतौ सुरापानसमौ ॥ २ ॥ ब्राह्मणस्य भूम्यपहरणं निक्षेपापहरणं सुवर्णस्तेयसमम् ॥ ३ ॥ पितृव्यमातामहमातुलश्वशुरनृपपत्न्यभिगमनं गुरुदारगमनसमम् ॥ ४ ॥ पितृष्वसृमातृष्वसृस्वसृगमनञ्च ॥ ५ ॥ श्रोत्रियर्त्विगुपाध्यायमित्रपत्न्यभिगमनञ्च ॥ ६ ॥ स्वसुः सख्याः सगोत्राया उत्तमवर्णायाः कुमार्य्या अन्त्यजाया रजस्वलायाः शरणागतायाः प्रव्रजिताया निक्षिप्तायाश्च ॥ ७ ॥

अनुपातकिनस्त्वेते महापातकिनो यथा ।
अश्वमेधेन शुध्यन्ति तीर्थानुसरणेन वा ॥ ८ ॥

इति वैष्णवे धर्म्मशास्त्रे षट्त्रिंशोऽध्यायः ॥३६॥

---

## सप्तत्रिंशोऽध्यायः ।

अनृतवचनमुत्कर्षे ॥ १ ॥ राजगामि च पैशुन्यम् ॥ २ ॥ गुरोश्चालीकनिर्बन्धः ॥ ३ ॥ वेदनिन्दा ॥ ४ ॥ अधीतस्य च त्यागः ॥ ५ ॥ अग्निमातृपितृसुतदाराणाञ्च ॥ ६ ॥ अभोज्यान्नाभक्ष्यभक्षणम् ॥ ७ ॥ परस्वापहरणम् ॥ ८ ॥ परदाराभिगमनम् ॥ ९ ॥ अयाज्ययाजनम् ॥ १० ॥ विकर्म्मजीवनञ्च ॥ ११ ॥ असत्प्रतिग्रहश्च ॥ १२ ॥ क्षत्रविट्शूद्रगोवध ॥ १३ ॥ अविक्रेयविक्रयः ॥ १४ ॥ परिवित्तितानुजेन ज्येष्ठस्य ॥ १५ ॥ परिवेदनम् ॥ १६ ॥ तस्य च कन्यादानम् ॥ १७ ॥ याजनञ्च ॥ १८ ॥ व्रात्यता ॥ १९ ॥ भृतकाध्यापनम् ॥ २० ॥ भृतकाध्ययनादानम् ॥ २१ ॥ सर्व्वाकरेष्वधिकारः ॥ २२ ॥ महायन्त्रप्रवर्त्तनम् ॥ २३ ॥ द्रुमगुल्मवल्लीलतौषधीनां हिंसा ॥ २४ ॥ स्त्रीजीवनम् ॥ २५ ॥ अभिचारमूलकर्म्मसु प्रवृत्तिः ॥ २६ ॥ आत्मार्थं क्रियारम्भः ॥ २७ ॥ अनाहिताग्निता ॥ २८ ॥ देवर्षिपितृऋणानामनपक्रिया ॥ २९ ॥ असच्छास्त्राभिगमनम् ॥ ३० ॥ नास्तिकता ॥ ३१ ॥ कुशीलवता ॥ ३२ ॥ मद्यपस्त्रीनिषेवणम् ॥ ३३ ॥ इत्युपपातकानि ॥ ३४ ॥

उपपातकिनस्त्वेते कुर्य्युश्चान्द्रायणं नराः ।
पराकञ्च तथा कुर्य्युर्यजेयुर्गोसवेन वा ॥ ३५

इति वैष्णवे धर्म्मशास्त्रे सप्तत्रिंशोऽध्यायः ॥३७॥

## अष्टत्रिंशोऽध्यायः।

ब्राह्मणस्य रुजाकरणम् ॥ १ ॥ अघ्रेयमद्ययोर्घ्रातिः ॥ २ ॥ जैह्म्यम् ॥ ३ ॥ पशुषु मैथुनाचरणम् ॥ ४ ॥ पुंसि च ॥ ५ ॥ इति जातिभ्रंशकराणि ॥ ६ ॥
जातिभ्रंशकरं कर्म्म कृत्वान्यतममिच्छया।
कुर्य्यात् सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया ॥ ७
इति वैष्णवे धर्म्मशास्त्रेऽष्टत्रिंशोऽध्यायः ॥ ३८ ॥

## एकोनचत्वारिंशोऽध्यायः।

ग्राम्यारण्यानां पशूनां हिंसा सङ्कराकरणम् ॥ १
सङ्करीकरणं कृत्वा मासमश्नीत यावकम्।
कृच्छ्रातिकृच्छ्रमथवा प्रायश्चित्तन्तु कारयेत् ॥ २
इति वैष्णवे धर्म्मशास्त्रे एकोनचत्वारिंशोऽध्यायः ॥३९

## चत्वारिंशोऽध्यायः।

निन्दितेभ्यो धनादानं वाणिज्यं कुसीदजीवनमसत्यभाषणं शूद्रसेवनमित्यपात्रीकरणम् ॥ १
अपात्रीकरणं कृत्वा तप्तकृच्छ्रेण शुध्यति।
शीतकृच्छ्रेण वा भूयो महासान्तपनेन वा ॥ २
इति वैष्णवे धर्म्मशास्त्रे चत्वारिंशोऽध्यायः ॥४०॥

## एकचत्वारिंशोऽध्यायः।

पक्षिणां जलचराणां जलजानाञ्च घातनम् ॥१॥
कृमिकीटानाञ्च ॥ २ ॥ मद्यानुगतभोजनम् ॥ ३ ॥
इति मलावहानि ॥ ४ ॥
मलिनीकरणीयेषु तप्तकृच्छ्रं विशोधनम्।
कृच्छ्रातिकृच्छ्रमथवा प्रायश्चित्तं विशोधनम् ॥ ५ ॥
इति वैष्णवे धर्म्मशास्त्रे एकचत्वारिंशोऽध्यायः ॥४१॥

## द्विचत्वारिंशोऽध्यायः

यन्नोक्तं तत्प्रकीर्णकम् ॥ १ ॥
प्रकीर्णपातके ज्ञात्वा गुरुत्वमथ लाघवम्।
प्रायश्चित्तं बुधः कुर्य्याद् ब्राह्मणानुमतः सदा ॥ २
इति वैष्णवे धर्म्मशास्त्रे द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

## त्रिचत्वारिंशोऽध्यायः।

अथ नरकाः ॥ १ ॥ तामिस्रम् ॥ २ ॥ अन्धतामिस्रम् ॥ ३ ॥ रौरवम् ॥ ४ ॥ महारौरवम् ॥ ५ ॥ कालसूत्रम् ॥ ६ ॥ महानरकम् ॥ ७ ॥ सञ्जीवनम् ॥ ८ ॥ अवीचिः ॥ ९ ॥ तपनम् ॥ १० सम्प्रतापनम् ॥ ११ ॥ सङ्घातकम् ॥ १२ ॥ काकोलम् ॥ १३ ॥ कुड्मलम् ॥ १४ ॥ कुट्टलम् ॥ १५ ॥ पूतिमृत्तिकम् ॥ १६ ॥ लोहशङ्कुः ॥ १७ ॥ ऋचीषम् ॥ १८ ॥ विषमपन्थानम् ॥ १९ ॥ कण्टकशाल्मलिः ॥ २० ॥ दीपनदी ॥ २१ ॥ असिपत्रवनम् ॥ २२ ॥ लोहचारकमिति ॥ २३ ॥ एतेषु कृतप्रायश्चित्ता अतिपातकिनः पर्य्यायेण कल्पं पच्यन्ते ॥ २४ ॥ महापातकिनो मन्वन्तरम् ॥ २५॥ अनुपातकिनश्च ॥ २६ ॥ उपपातकिनश्चतुर्युगम् ॥ कृतसङ्करीकरणाश्च संवत्सरसहस्रम् ॥ २८ ॥ कृतजातिभ्रंशकरणाश्च ॥२९ । कृतापात्रीकरणाश्च ॥ ३० ॥ कृतमलिनीकरणाश्च ॥ ३१ ॥ प्रकीर्णपातकिनश्च बहून् वर्षपूगान् ॥ ३२ ॥
कृतपातकिनः सर्व्वे प्राणत्यागादनन्तरम्।
याम्यं पन्थानमासाद्य दुःखमश्नन्ति दारुणम् ॥ ३३
यमस्य पुरुषैर्घोरैः कृष्यमाणा यतस्ततः।
सुकृच्छ्रेणानुकारेण नीयमानाश्च ते यथा ॥ ३४
श्वभिः शृगालैः क्रव्यादैः काककङ्कबकादिभिः।
अग्नितुण्डैर्भक्ष्यमाणा भुजङ्गैर्वृश्चिकैस्तथा ॥ ३५
अग्निना दह्यमानाश्च तुद्यमानाश्च कण्टकैः।
क्रकचैः पाट्यमानाश्च पीड्यमानाश्च तृष्णया ॥ ३६

क्षुधया बाध्यमानाश्च घोरैर्व्याघ्रगणैस्तथा ।
पूयशोणितगन्धेन मूर्च्छमाना पदे पदे ॥ ३७
परान्नपानं लिप्सन्तस्ताड्यमानाश्च किङ्करैः ।
काकाङ्ककवकादीनां भीमानां वह्न्याननैः ॥ ३८
क्वचित् क्वाथ्यन्ति तैलेन ताड्यन्ते मुषलैः क्वचित् ।
आयसीषु च वध्यन्ते शिलासु च तथा क्वचित् ॥ ३९
क्वचिद्वान्तमथाश्नन्ति क्वचित् पूयमसृक् क्वचित् ।
क्वचिद्विष्ठां क्वचिन्मांसं पूयगन्धि सुदारुणम् ॥ ४०
अन्धकारेषु तिष्ठन्ति दारुणेषु तथा क्वचित् ।
कृमिभिर्भक्ष्यमाणाश्च वह्नितुण्डैश्च दारुणैः ॥ ४१
क्वचिच्छीतेन बाध्यन्ते क्वचिदामेध्यमध्यगाः ।
परस्परमथाश्नन्ति क्वचित् प्रेताः सुदारुणाः ॥ ४२
क्वचिद्वृक्षेण ताड्यन्ते लम्बमानास्तथा क्वचित् ।
क्वचित् क्षिप्यन्ति बाणौघैश्छिद्यन्ते तथा क्वचित् ॥ ४३
कण्ठेषु चरणाश्च भुजङ्गाभोगवेष्टिताः ।
पीड्यमानास्तथा यन्त्रैः कृष्यमाणाश्च जानुभिः ॥ ४४
भग्नपृष्ठशिरोग्रीवाः सूचीकण्ठाः सुदारुणाः ।
कूटागारप्रमाणैश्च शरीरैर्यातनाक्षमैः ॥ ४५
एवं मानविकाः पापमनुभूय सुदुःखिताः ।
तिर्यग्योनौ प्रपद्यन्ते दुःखानि विविधानि च ॥ ४६
इति वैष्णवे धर्मशास्त्रे त्रिचत्वारिंशोऽध्यायः ॥४३॥

## चतुश्चत्वारिंशोऽध्यायः ।

अथ पापात्मनां नरकानुभूतदुःखानां तिर्यग्योनयो भवन्ति ॥ १ ॥ अतिपातकिनां पर्यायेण सर्वाः स्थावरयोनयः ॥ २ ॥ महापातकिनाञ्च कृमियोनयः ॥ ३ ॥ अनुपातकिनां पक्षियोनयः ॥ ४ ॥ उपपातकिनां जलजयोनयः ॥ ५ ॥ कृतजातिभ्रंशकराणां जलचरयोनयः ॥ ६ ॥ कृतसङ्करीकरणकर्मणां मृगयोनयः ॥ ७ ॥ कृतापात्रीकरणकर्मणां पशुयोनयः ॥ ८ ॥ कृतमलिनीकरणकर्मणां मनुष्येष्वस्पृश्ययोनयः ॥ ९ ॥ प्रकीर्णेषु प्रकीर्णा हिंस्राः क्रव्यादा भवन्ति ॥ १० ॥ अभोज्यान्नभक्षणाशी कृमिः ॥ ११ ॥ स्तेनः श्येनः ॥ १२ ॥ [illegible]धान्यापहारी बिलेशयः ॥ १३ ॥ आमधान्यहारी ॥ १४ ॥ हंसः कांस्यापहारी ॥ १५ ॥ जलं हृत्वाभिप्लवः ॥ १६ ॥ मधु दंशः ॥ १७ ॥ पयः काकः ॥ १८ ॥ रसं श्वा ॥ १९ ॥ घृतं नकुलः ॥ २० ॥ मांसं गृध्रः ॥ २१ ॥ वसां मद्गुः ॥ २२ ॥ तैलं तैलपायिकः ॥ २३ ॥ लवणं चीरीवाक् ॥ २४ ॥ दधि बलाका ॥ २५ ॥ कौशेयं हृत्वा भवति तित्तिरिः ॥ २६ ॥ क्षौमं दर्दुरः ॥ २७ ॥ कार्पासतान्तवं क्रौञ्चः ॥ २८ ॥ गोधा गाम् ॥ २९ ॥ वाग्गुदो गुडम् ॥ ३० ॥ छुच्छुन्दरिर्गन्धान् ॥ ३१ ॥ पत्रशाकं बर्ही ॥ ३२ ॥ कृतान्नं श्वावित् ॥ ३३ ॥ अकृतान्नं शल्यकः ॥ ३४ ॥ अग्निं बकः ॥ ३५ ॥ गृहकार्युपस्करम् ॥ ३६ ॥ रक्तवासांसि जीवञ्जीवकः ॥ ३७ ॥ गजं कूर्मः ॥ ३८ ॥ अश्वं व्याघ्रः ॥ ३९ ॥ फलं पुष्पं वा मर्कटः ॥ ४० ॥ ऋक्षः स्त्रियम् ॥ ४१ ॥ यानमुष्ट्रः ॥ ४२ ॥ पशूनजः ॥ ४३ ॥

यद्वा तद्वा परद्रव्यमपहृत्य बलान्नरः ।
अवश्यं याति तिर्यक्त्वं जग्ध्वा चैवाहुतं हविः ॥४४
स्त्रियोऽप्येतेन कल्पेन हृत्वा दोषमवाप्नुयुः ।
एतेषामेव जन्तूनां भार्यात्वमुपयान्ति ताः ॥ ४५
इति वैष्णवे धर्मशास्त्रे चतुश्चत्वारिंशोऽध्यायः ॥४४॥

## पञ्चचत्वारिंशोऽध्यायः ।

अथ नरकानुभूतदुःखानां तिर्यक्त्वमुत्तीर्णानां मनुष्येषु लक्षणानि भवन्ति ॥ १ ॥ कुष्ठ्यतिपातकी ॥ २ ॥ ब्रह्महा यक्ष्मी ॥ ३ ॥ सुरापः श्यावदन्तकः ॥ ४ ॥ सुवर्णहारी कुनखः ॥ ५ ॥ गुरुतल्पगो दुश्चर्मा ॥ ६ ॥ पूतिनासः पिशुनः ॥ ७ ॥ पूतिवक्त्रः सूचकः ॥ ८ ॥ धान्यचौरोऽङ्गहीनः ॥ ९ ॥ मिश्रचौरोऽतिरिक्ताङ्गः ॥ १० ॥ अन्नापहारकस्त्वामयावी ॥ ११ ॥ वागपहारको मूकः ॥ १२ ॥ वस्त्रापहारकः श्वित्री ॥ १३ ॥ अश्वापहारकः पङ्गुः ॥ १४ ॥ देवब्राह्मणाक्रोशको मूकः ॥ १५ ॥

गोऽलिका शरद: ॥ १६ ॥ उद्भ्रान्तोऽमिद: ॥ १७ ॥
अप्रतिकूलोऽपस्मारी ॥ १८ ॥ गोत्रस्वन्ध: ॥ १९ ॥
पापहारकश्च ॥ २० ॥ कायश्च दीपनिर्वापक: ॥
१ ॥ त्रपुचामरसीसकविक्रयी रजक: ॥ २२ ॥
मद्यपविक्रयी मृगव्याध: ॥ २३ ॥ कुण्डाशी
शास्य: ॥ २४ ॥ चारित्रक: स्तेन: ॥ २५ ॥ वार्द्धु-
को भ्रामरी ॥ २६ ॥ मिष्टाशी काकी वातगुल्मी ॥
७ ॥ समयभेत्ता खल्वाट: ॥ २८ ॥ औपप-
श्चौर्य्यी ॥ २९ ॥ परद्रव्यत्रियो दरिद्र: ॥ ३० ॥
परपीड़ाकरो दीर्घरोगी ॥ ३१ ॥
वं कर्म्मविशेषेण जायन्ते लक्षणान्विता: ।
गान्विताश्चैवान्याश्च कुलस्त्रैकलोचना: ॥ ३२
मना वधिरा मूका दुर्व्वर्णाश्च तथापरे ।
स्मात् सर्व्वं प्रयत्नेन प्रायश्चित्तं समाचरेत् ॥ ३३
त वैष्णवे धर्म्मशास्त्रे पञ्चचत्वारिंशोऽध्याय: ॥४५॥

---

## षट्चत्वारिंशोऽध्याय: ।

अथ कृच्छ्राणि भवन्ति ॥ १ ॥ त्र्यहं नाश्नीयात् ॥
॥ प्रत्यहञ्च त्रिषवणं स्नानमाचरेत् ॥ ३ ॥ त्रि:-
तस्नानमप्सु मज्जनम् ॥ ४ ॥ मग्नस्त्रिरघमर्षणं
पेत् ॥ ५ ॥ दिवास्थितस्तिष्ठेत् ॥ ६ ॥ रात्रा-
सीन: ॥ ७ ॥ कर्म्मणोऽन्ते पयस्विनीं दद्यात् ॥ ८ ॥
घमर्षणम् ॥ ९ ॥ त्र्यहं सायं त्र्यहं प्रातस्त्र्य-
मयाचितमश्नीयादेष प्राजापत्य: ॥ १० ॥ त्र्यह-
म्णा: पिबेदपस्त्र्यहमुष्णं घृतं त्र्यहमुष्णं पय-
त्र्यहञ्च नाश्नीयादेष तप्तकृच्छ्र: ॥ ११ ॥ एष एव
तै: शीतकृच्छ्र: ॥ १२ ॥ कृच्छ्रातिकृच्छ्र:
त्वा दिवसैकविंशतिञ्चपयसाम् ॥ १३ ॥ उदक-
सक्तूनां मासाभ्यवहारेणोदककृच्छ्र: ॥ १४ ॥ बिसा-
भ्यवहारेण मूलकृच्छ्र: ॥ १५ ॥ बिल्वाभ्यवहारेण
श्रीफलकृच्छ्र: ॥ १६ ॥ पद्माक्षैर्व्वा ॥ १७ ॥
द्वादशाहं हादशाहेन पराक: ॥ १८ ॥ गोमूत्र
मयक्षीरदधिसर्पि:कुशोदकान्येकदिवसमश्नीयाद्-
नोयस्तुपवसेदेतत् सान्तपनम् ॥ १९ ॥ गोमूत्रा-
दिभि: प्रत्यहाभ्यस्तैर्महासान्तपनम् ॥ २० ॥
त्र्यहाभ्यस्तैश्चातिसान्तपनम् ॥ २१ ॥ पिण्याका-
चामतक्रोदकसक्तूनां त्र्युपवासान्तरितोऽभ्यवहारस्तुला-
पुरुष: ॥ २२ ॥ कुशपलाशोडुम्बर-पद्म-शङ्खपुष्पी-
वट-ब्रह्मसुवर्च्चलापत्रै: क्वथितस्याम्भस: प्रत्येकं पानेन
पर्णकृच्छ्र: । २३ ॥
कृच्छ्राण्येतानि सर्व्वाणि कुर्व्वीत हतपातक: ।
नित्यं त्रिषवणस्नायी अध:शायी जितेन्द्रिय: ॥ २४
स्त्रीशूद्रपतितानाञ्च वर्जयेच्चाभिभाषणम् ।
पवित्राणि जपेन्नित्यं जुहुयाच्चैव शक्तित: ॥ २५
इति वैष्णवे धर्म्मशास्त्रे षट्चत्वारिंशोऽध्याय: ॥ ४६ ।

---

## सप्तचत्वारिंशोऽध्याय: ।

अथ चान्द्रायणम् ॥ १ ॥ ग्रासानविकारा-
नश्नीयात् ॥ २ ॥ तांश्च कलाभिवृद्धौ क्रमेण वर्द्धयेद्धानौ
ह्रासयेदमावास्यां नाश्नीयादेष चान्द्रायणो यवमध्य: ॥
३ ॥ पिपीलिकामध्यो वा ॥ ४ ॥ यस्यामावास्या
मध्ये भवति स पिपीलिकामध्य: ॥ ५ ॥ यस्य
पौर्णमासी स यवमध्य: ॥ ६ ॥ अष्टौ ग्रासान्
प्रतिदिवसं मासमश्नीयात् स यतिचान्द्रायण: ॥ ७ ॥
सायं प्रातश्चतुरश्चतुर: स शिशुचान्द्रायण: ॥ ८ ॥
यथा कथञ्चित् षष्टीनां त्रिशतीं मासेनाश्नीयात्
स सामान्यचान्द्रायण: ॥ ९ ॥
व्रतमेतत् पुरा भूमि कृत्वा सप्तर्षयोऽमला: ।
प्राप्तवन्त: परं स्थानं ब्रह्मा रुद्रस्तथैव च ॥ १०
इति वैष्णवे धर्म्मशास्त्रे सप्तचत्वारिंशोऽध्याय: ॥४७॥

---

## अष्टचत्वारिंशोऽध्याय: ।

अथ कर्म्मभिरात्मकृतैर्गुरुमात्मानं मन्येतात्मार्थं
प्रसृतियावकं श्रपयेत् ॥ १ ॥ न ततोऽग्नौ जुहुयात् ॥
२ ॥ न चात्र बलिकर्म्म ॥ ३ ॥ अशृतं श्रप्यमाणं
शृतञ्चाभिमन्त्रयेत् ॥ ४ ॥ अप्रमाणी रक्षां कुर्य्यात् ॥
५ ॥ ब्रह्मा देवानां पदवी: कवीनाम् ऋषिर्विप्राणां

मधिगो व्याह्यां प्रणवो गवायां स्वधितिर्व्वनानां सोमः पवित्रमत्येति रेभन्निति दर्भान् बध्नाति ॥ ६ ॥ घृतञ्च तमश्नीयात् पात्रे निषिच्य ॥ ७ ॥ ये देवा मनोजाता मनोजुषः सुदक्षा दक्षपितरः ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहेत्यात्मनि जुहुयात् ॥ ८ ॥ अथाचान्तो नाभिमालभेत ॥ ९ ॥ यवाः प्रीता भवत यूयमापोऽस्माकमुदरे यवाः । ता अस्मभ्यमनमीवा अयक्ष्मा अनागसः सन्तु देवीरमृता ऋतावृध इति ॥ १० ॥ त्रिरात्रं मेधावी ॥ ११ ॥ षड्रात्रं पापकृत् ॥ १२ ॥ सप्तरात्रं पीत्वा महापातकिनामप्यनमः पुनाति ॥ १३ ॥ द्वादशरात्रेण पूर्वपुरुषकृतमपि पापं निर्हन्ति ॥ १४ ॥ मासं पीत्वा सर्व्वपापानि ॥ १५ ॥ गोनिर्हारमुक्तानां यवानामेकविंशतिरात्रञ्च ॥ १६ ॥

यवोऽसि धान्यराजोऽसि वारुणो मधुसंयुतः ।
निर्णोदः सर्व्वपापानां पवित्रमृषिभिः स्मृतम् ॥ १७
घृतमेव मधु यवा आपो वा अमृतं यवाः ।
सर्व्वं पुनीत मे पापं यच्च किञ्चन दुष्कृतम् ॥ १८
वाचा कृतं कर्म्मकृतं मनसा च विचिन्तितम् ।
अलक्ष्मीं कालकर्णीञ्च नाशयध्वं यवा मम ॥ १९
श्वसूकरावलीढञ्च उच्छिष्टोपहतञ्च यत् ।
मातापित्रोरशुश्रूषां पुनीध्वञ्च यवा मम ॥ २०
गणान्नं गणिकान्नञ्च शूद्रान्नं श्राद्धसूतकम् ।
चौरस्यान्नं नवश्राद्धं पुनीध्वञ्च यवा मम ॥ २१
बालधर्म्ममधर्म्मञ्च राजद्वारकृतञ्च यत् ।
सुवर्णस्तेयमव्रात्यमयाज्यस्य च याजनम् ।
ब्राह्मणानां परीवादं पुनीध्वञ्च यवा मम ॥ २२ ॥

इति वैष्णवे धर्म्मशास्त्रेऽष्टचत्वारिंशोऽध्यायः ॥ ४८॥

---

## एकोनपञ्चाशोऽध्यायः ।

मार्गशीर्षशुक्लैकादश्यामुपोषितो द्वादश्यां भगवन्तं वासुदेवमर्च्चयेत् ॥ १ ॥ पुष्पधूपानुलेपनदीपनैवेद्यैर्ब्राह्मणतर्पणैश्च ॥ २ ॥ व्रतमेतत् संवत्सरं कृत्वा पापेभ्यः पूतो भवति ॥ ३ ॥ यावज्जीवं कृत्वा श्वेतद्वीपमाप्नोति ॥ ४ ॥ उभयपक्षद्वादश्यां कृत्वा स्वर्गलोकं प्राप्नोति ॥ ५ ॥ यावज्जीवं कृत्वा विष्णोर्लोकमाप्नोति ॥ ६ ॥ एवमेव पञ्चदश्यामपि ॥ ७

ब्रह्मभूतममावास्यां पौर्णमास्यां तथैव च ।
योगभूतं परिचरन् केशवं महदाप्नुयात् ॥ ८
इन्दुना सहितौ यस्यां दिवि चन्द्रबृहस्पती ।
पौर्णमासी तु महती प्रोक्ता संवत्सरे तु सा ॥ ९
तस्यां दानोपवासाद्यमक्षयं परिकीर्त्तितम् ॥
तथैव द्वादशी शुक्ला या स्याच्छ्रवणसंयुता ॥ १०

इति वैष्णवे धर्म्मशास्त्रे एकोनपञ्चाशोऽध्यायः ॥ ४९

---

## पञ्चाशोऽध्यायः ।

वने पर्णकुटीं कृत्वा वसेत् ॥ १ ॥ त्रिषवणं स्नायात् ॥ २ ॥ स्वकर्म्म चाचक्षाणो ग्रामे भैक्षमाचरेत् ॥ ३ ॥ तृणशायी च स्यात् ॥ ४ ॥ एतन्महाव्रतम् ॥ ५ ॥ ब्राह्मणं हत्वा द्वादशसंवत्सरं कुर्य्यात् ॥ ६ ॥ यागस्थं क्षत्रियं वा ॥ ७ ॥ वैश्यं रजस्वलां वा ॥ ८ ॥ अत्रिगोत्रां वा नारीम् ॥ ९ ॥ मित्रं वा ॥ १० ॥ नृपतिवधे महाव्रतमेव द्विगुणं कुर्य्यात् ॥ ११ ॥ पादोनं क्षत्रियवधे ॥ १२ ॥ अर्द्धं वैश्यवधे ॥ १३ ॥ तदर्द्धं शूद्रवधे ॥ १४ ॥ सर्व्वेषु शवशिरोध्वजी स्यात् ॥ १५ ॥ सर्व्वेषु जीवेषु चर्म्मी स्यात् । मासमेकं कृतवापनो गवानुगमनं कुर्य्यात् ॥ १६ ॥ आसीनास्वासीत ॥ १७ ॥ स्थितासु स्थितः स्यात् ॥ १८ ॥ अवसन्नाश्चोद्धरेत् ॥ १९ ॥ भयेभ्यश्च रक्षेत् ॥ २० ॥ तासां शीतादिनिवारणमकृत्वा नात्मनः कुर्य्यात् ॥ २१ ॥ गोमूत्रेण स्नायात् ॥ २२ ॥ गोरसेन वर्त्तेत ॥ २३ ॥ एतद्गोव्रतं गोवधे कुर्य्यात् ॥ २४ ॥ गवां हत्वा पञ्च गोवान् दद्यात् ॥ २५ ॥ तुरगं वासः ॥ २६ ॥ एकहायनमनड्वाहं खरवधे ॥ २७ ॥ मेषाजवधे च ॥ २८ ॥ सुवर्णकृष्णलं उष्ट्रवधे ॥ २९ ॥ श्वानं हत्वा त्रिरात्रमुप-

पयोविकारं च शाकं शुक्तं स्नाकवच्च वर्ज्जयित्वा पर्य्युषितं तत्प्राश्योपवसेत् ॥ ३५ ॥ यज्ञानामेध्य-प्रभवान् लोहितांश्च वृक्षनिर्यासान् ॥ ३६ ॥ प्राक्क-वृथाकृसरसंयावपायसापूपशष्कुलीदेवान्नानि हवींषि च ॥ ३७ ॥ गोऽजामहिषीवर्ज्जं सर्व्वपयांसि च ॥ ३८ ॥ अनिर्दशाहानि तान्यपि ॥ ३९ ॥ स्यन्दिनी-सन्धिनीविवत्सानाञ्चैरञ्च ॥ ४० ॥ अमेध्यभुजश्च ॥ ४१ ॥ दधिवर्ज्जं केवलानि च शुक्तानि ॥ ४२ ॥ ब्रह्मचर्य्याश्रमी श्राद्धभोजने प्राजापत्यम् ॥ ४३ ॥ दिनमेकञ्चोदके वसेत् ॥ ४४ ॥ मधुमांसाशने प्राजा-पत्यम् ॥ ४५ ॥ विडालकाकनकुलाखूच्छिष्टभक्षणे ब्रह्मसुवर्च्चलां पिबेत् ॥ ४६ ॥ श्वोच्छिष्टाशने दिन-मेकमुपोषितः पञ्चगव्यं पिबेत् ॥ ४७ ॥ पञ्चनख-विण्मूत्राशने सप्तरात्रम् ॥ ४८ ॥ आमश्राद्धाशने त्रिरात्रं पयसा वर्त्तेत ॥ ४९ ॥ ब्राह्मणः शूद्रोच्छिष्टा-शने सप्तरात्रम् ॥ ५० ॥ वैश्योच्छिष्टाशने पञ्च-रात्रम् ॥ ५१ ॥ राजन्योच्छिष्टाशने त्रिरात्रम् ॥ ५२ ॥ ब्राह्मणोच्छिष्टाशने त्वेकाहम् ॥ ५३ ॥ राजन्यः शूद्रोच्छिष्टाशी पञ्चरात्रम् ॥ ५४ ॥ वैश्यो-च्छिष्टाशी त्रिरात्रम् ॥ ५५ ॥ वैश्यः शूद्रोच्छिष्टाशी च ॥ ५६ ॥ चाण्डालान्नं भुक्त्वा त्रिरात्रमुपवसेत् ॥ ५७ ॥ सिद्धं भुक्त्वा पराकः ॥ ५८ ॥

असंस्कृतान् पशून् मन्त्रैर्नाद्याद्विप्रः कथञ्चन ।
मन्त्रैस्तु संस्कृतानद्याच्छाश्वतं विधिमास्थितः ॥ ५९

यावन्ति पशुरोमाणि तावत् कृत्वेह मारणम् ।
वृथापशुघ्नः प्राप्नोति प्रेत्य चेह च निष्कृतिम् ॥ ६०

यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयम्भुवा ।
यज्ञो हि भूत्यै सर्व्वस्य तस्माद्यज्ञे वधोऽवधः ॥ ६१

न तादृशं भवत्येनो मृगहन्तुर्धनार्थिनः ।
यादृशं भवति प्रेत्य वृथामांसानि खादतः ॥ ६२

ओषध्यः पशवो वृक्षास्तिर्य्यञ्चः पक्षिणस्तथा ।
यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितीः पुनः ॥ ६३

मधुपर्के च यज्ञे च पितृदैवतकर्म्मणि ।
अत्रैव पशवो हिंस्या नान्यत्रेति कथञ्चन ॥ ६४

एष्वर्थेषु पशून् हिंसन् वेदतत्त्वार्थविद्द्विजः ।
आत्मानञ्च पशूंश्चैव गमयत्युत्तमां गतिम् ॥ ६५

गृहे गुरावरण्ये वा निवसन्नात्मवान् द्विजः ।
नावेदविहितां हिंसामापद्यपि समाचरेत् ॥ ६६

या वेदविहिता हिंसा नियतास्मिंश्चराचरे ।
अहिंसामेव तां विद्याद्वेदाद्धर्म्मो हि निर्बभौ ॥ ६७

योऽहिंसकानि भूतानि हिनस्त्यात्मसुखेच्छया ।
स जीवंश्च मृतश्चैव न क्वचित् सुखमेधते ॥ ६८

यो बन्धनवधक्लेशान् प्राणिनां न चिकीर्षति ।
स सर्व्वस्य हितप्रेप्सुः सुखमत्यन्तमश्नुते ॥ ६९

यद्ध्यायति यत् कुरुते रतिं बध्नाति यत्र च ।
तदवाप्नोति यत्नेन यो हिनस्ति न किञ्चन ॥ ७०

नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित् ।
न च प्राणिवधः स्वर्ग्यस्तस्मान्मांसं विवर्ज्जयेत् ॥ ७१

समुत्पत्तिञ्च मांसस्य वधबन्धौ च देहिनाम् ।
प्रसमीक्ष्य निवर्त्तेत सर्व्वमांसस्य भक्षणात् ॥ ७२

न भक्षयति यो मांसं विधिं हित्वा पिशाचवत् ।
स लोके प्रियतां याति व्याधिभिश्च न पीड्यते ॥ ७३

अनुमन्ता विशसिता निहन्ता क्रयविक्रयी ।
संस्कर्त्ता चोपहर्त्ता च खादकश्चेति घातकाः ॥ ७४

स्वमांसं परमांसेन यो वर्द्धयितुमिच्छति ।
अनभ्यर्च्य पितॄन् देवांस्ततोऽन्यो नास्त्यपुण्यकृत् ॥ ७५

वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः ।
मांसानि च न खादेद्यस्तस्य पुण्यफलं समम् ॥ ७६

फलमूलाशनैर्मेध्यैर्मुन्यन्नानाञ्च भोजनैः ।
न तत् फलमवाप्नोति यन्मांसपरिवर्ज्जनात् ॥ ७७

मां स भक्षयितामुत्र यस्य मांसमिहाद्म्यहम् ।
एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः ॥ ७८

इति वैष्णवे धर्म्मशास्त्रे एकपञ्चाशोऽध्यायः ॥ ५१ ॥

---

## द्विपञ्चाशोऽध्यायः ।

सुवर्णस्तेयकृद्राज्ञे कर्म्माचक्षाणो मुषलमर्पयेत् ॥ वधात् त्यागाद्वा पूतो भवति ॥ २ ॥ महाव्रतं

द्वादशाब्दानि कुर्य्यात् ॥ ३ ॥ निक्षेपापहारी च ॥४॥ धान्यधनापहारी च कृच्छ्रमब्दम् ॥ ५ ॥ मनुष्यस्त्री-कूपक्षेत्रवापीनामपहरणे चान्द्रायणम् ॥ ६ ॥ द्रव्याणामल्पसाराणां सान्तपनम् ॥ ७ ॥ भक्ष्यभोज्ययान-शय्यासनपुष्पमूलफलानां पञ्चगव्यपानम् ॥ ८ ॥ तृण-काष्ठद्रुमशुष्कान्नगुडवस्त्रचर्म्मामिषाणां त्रिरात्रमुप-वसेत् ॥ ९ ॥ मणिमुक्ताप्रवालताम्ररजतायःकांस्यानां द्वादशाहं कणान्नमश्नीयात् ॥ १० ॥ कार्पासकीटजो-र्णाद्यपहरणे त्रिरात्रं पयसा वर्त्तेत ॥ ११ ॥ द्वि-शफैकशफापहरणे त्रिरात्रमुपवसेत् ॥ १२ ॥ पक्षिगन्धौ-षधिरज्जुवैदलानामपहरणे दिनमुपवसेत् ॥ १३ ॥

द्रव्यं वापहृतं द्रव्यं धनिकस्याप्युपायतः ।
प्रायश्चित्तं ततः कुर्य्यात् कल्मषस्यापनुत्तये ॥ १४ ॥
यद्यत् परेभ्य आदद्यात् पुरुषस्तु निरङ्कुशः ।
तेन तेन विहीनः स्याद्यत्र यत्राभिजायते ॥ १५ ॥
जीवितं धर्म्मकामौ च धने यस्मात् प्रतिष्ठितौ ।
तस्मात् सर्व्वप्रयत्नेन धनहिंसां विवर्ज्जयेत् ॥ १६ ॥
प्राणिहिंसापरो यस्तु धनहिंसापरस्तथा ।
महादुःखमवाप्नोति धनहिंसापरस्तयोः ॥ १७ ॥

इति वैष्णवे धर्म्मशास्त्रे द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

---

## त्रिपञ्चाशोऽध्यायः ।

अथागम्यागमने महाव्रतविधानेनाब्दं चीरवासा वने प्राजापत्यं कुर्य्यात् ॥ १ ॥ परदारगमने च ॥ २ ॥ गोव्रतं गोगमने च ॥ ३ ॥ पुंस्ययोनावाकाशेऽप्सु दिवा गोयाने च सवासाः स्नानमाचरेत् ॥ ४ ॥ चाण्डालीगमने तत्साम्यमवाप्नुयात् ॥ ५ ॥ अज्ञान-तश्चान्द्रायणद्वयं कुर्य्यात् ॥ ६ ॥ पशुवेश्यागमने प्राजापत्यम् ॥ ७ ॥ सकृद्दुष्टा स्त्री यत् पुरुषस्य परदारे तद्व्रतं कुर्य्यात् ॥ ८ ॥

यत्करोत्येकरात्रेण वृषलीसेवनाद्द्विजः ।
तद्भैक्ष्यभुग्जपन् नित्यं त्रिभिर्व्वर्षैर्व्यपोहति ॥ ९ ॥

इति वैष्णवे धर्म्मशास्त्रे त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

---

## चतुःपञ्चाशोऽध्यायः ।

यः पापात्मा येन सह संयुज्यते स तस्यैव प्राय-श्चित्तं कुर्य्यात् ॥ १ ॥ मृतपञ्चनखात् कूपादत्यन्तो-पहताच्चोदकं पीत्वा ब्राह्मणस्त्रिरात्रमुपवसेत् ॥ २ ॥ द्व्यहं राजन्यः ॥ ३ ॥ एकाहं वैश्यः ॥ ४ ॥ शूद्रो नक्तम् ॥५॥ सर्व्वे चान्ते व्रतस्य पञ्चगव्यं पिबेयुः ॥६॥

पञ्चगव्यं पिबेच्छूद्रो ब्राह्मणस्तु सुरां पिबेत् ।
उभौ तौ नरकं यातो महारौरवसंज्ञितम् ॥ ७ ।

पर्व्वाणारोग्यवर्ज्जं मृतावगाह्य(?) पत्नीं त्रिरात्रमुप-वसेत् ॥ ८ ॥ कूटसाक्षी ब्रह्महत्याव्रतं चरेत् ॥ ९ ॥ अनुदकमूत्रपुरीषकरणे सचैलस्नानं महाव्याहृति-होमश्च ॥ १० ॥ सन्ध्याभुग्दिनविमुक्तः सचैलस्नानः सावित्र्यष्टशतमावर्त्तयेत् ॥ ११ ॥ श्वसृगालविड्-वराहखरवानरवायसपुंश्चलीभिर्दष्टः स्रवन्तीमासाद्य षोडश प्राणायामान् कुर्य्यात् ॥ १२ ॥ वेदाप्लुतव्रती नियमस्वाध्यायशायी संवत्सरं मन्दभैक्ष्येण वर्त्तेत ॥ १३ ॥ समुत्कर्षानृते गुरोश्चालीकनिर्ब्बन्धे तदा-पणे च मासं पयसा वर्त्तेत ॥ १४ ॥ नास्तिको नास्तिकवृत्तिः कृतघ्नः कूटव्यवहारी ब्राह्मणवृत्तिघ्न-श्चैते संवत्सरं भैक्ष्येण वर्त्तेरन् ॥१५॥ परिवित्तिः परि-वेत्ता यया च परिविद्यते दाता याजकश्च चान्द्रायणं कुर्य्यात् ॥ १६ ॥ प्राणिभूपुण्यसोमविक्रयी तप्तकृच्छ्रं कुर्य्यात् ॥ १७ ॥ आर्द्रौषधिगन्धपुष्पफलमूलचर्म्म-वेत्रवैदलतुषकपालकेशभस्मास्थिगोरसपिण्याकतिल-तैलविक्रयी प्राजापत्यम् ॥ १८ ॥ श्लेष्मकुसुमधूच्छिष्ट-शङ्खशुक्तिसीसत्रपुलोहोदुम्बरखड्गपात्रविक्रयी चान्द्रायणं कुर्य्यात् ॥ १९ ॥ रक्तवस्त्ररङ्गरत्नगन्धगुड-मधुरसोर्णाविक्रयी त्रिरात्रमुपवसेत् ॥ २० ॥ मांस-लवणलाक्षाक्षीरविक्रयी चान्द्रायणं कुर्य्यात् ॥ २१ ॥ तञ्च भूयश्चोपनयेत् ॥ २२ ॥ उष्ट्रेण खरेण वा गत्वा नग्नः स्नात्वा सुप्त्वा भुक्त्वा प्राणायामत्रयं कुर्य्यात् ॥ २३ ॥

जपित्वा त्रीणि सावित्र्याः सहस्राणि समाहितः ।
मासं गोष्ठे पयः पीत्वा मुच्यतेऽसत्प्रतिग्रहात् ॥ २४॥

अयाज्ययाजनं कृत्वा परेषामन्त्यकर्म्म च ।
अभिचारमहीनञ्च त्रिभिः कृच्छ्रैर्व्यपोहति ॥ २५ ॥
येषां द्विजानां सावित्री नानूच्येत यथाविधि ।
तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेत् ॥ २६
प्रायश्चित्तं चिकीर्षन्ति विकर्म्मस्थास्तु ये द्विजाः ।
ब्रह्मणा च परित्यक्तास्तेषामप्येतदादिशेत् ॥ २७ ॥
यद्गर्हितेनार्ज्जयन्ति कर्म्मणा ब्राह्मणा धनम् ।
तस्योत्सर्गेण शुध्यन्ति जप्येन तपसा तथा ॥ २८ ॥
वेदोदितानां नित्यानां कर्म्मणां समतिक्रमे ।
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम् ॥ २९ ॥
अब्रगण्यं चरेत् कृच्छ्रमतिकृच्छ्रं निपातने ।
कृच्छ्रातिकृच्छ्रं कुर्व्वीत विप्रस्योत्पाद्य शोणितम् ॥ ३०
एनस्विभिरनिर्णिक्तैर्नार्थं कश्चित् समाचरेत् ।
कृतनिर्णेजनांश्चैतान्न जुगुप्सेत धर्म्मवित् ॥ ३१ ॥
बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्म्मतः ।
शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवसेत् ॥ ३२ ॥
अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडशः ।
प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो रोगिण एव च ॥ ३३ ॥
अनुक्तनिष्कृतीनाञ्च पापानामपनुत्तये ।
शक्तिञ्चावेक्ष्य पापञ्च प्रायश्चित्तं प्रकल्पयेत् ॥ ३४ ॥
इति वैष्णवे धर्म्मशास्त्रे चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

— —

## पञ्चपञ्चाशोऽध्यायः ।

अथ रहस्यप्रायश्चित्तानि भवन्ति ॥ १ ॥ सवनीमासाद्य स्नातः प्रत्यहं षोडश प्राणायामान् कृत्वैककालं हविष्याशी मासेन ब्रह्महा पूतो भवति ॥ २ ॥ कर्म्मणोऽन्ते पयस्विनीं गां दद्यात् ॥ ३ ॥ अनेनाघमर्षणेन च सुरापः पूतो भवति ॥ ४ ॥ गायत्र्यादशसाहस्रजपेन सुवर्णस्तेयकृत् ॥ ५ ॥ त्रिरात्रोपोषितः पुरुषसूक्तजपहोमाभ्यां गुरुतल्पगः ॥ ६ ॥
यथाश्वमेधः क्रतुराट् सर्व्वपापापनोदनः ।
तथाघमर्षणं सूक्तं सर्व्वपापापनोदनम् ॥ ७
प्राणायामं द्विजः कुर्य्यात् सर्व्वपापापनुत्तये ।
दह्यन्ते सर्व्वपापानि प्राणायामैर्द्विजस्य तु ॥ ८
सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥ ९
अकारञ्चाप्युकारञ्च मकारञ्च प्रजापतिः ।
वेदत्रयान्निरदुहद्भूर्भुवःस्वरितीति च ॥ १०
त्रिभ्य एव च वेदेभ्यः पादं पादमदूदुहत् ।
तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः ॥ ११
एतदक्षरमेताञ्च जपन् व्याहृतिपूर्व्विकाम् ।
सन्ध्ययोर्व्वेदविद्विप्रो वेदपुण्येन युज्यते ॥ १२
सहस्रकृत्वस्त्वभ्यस्य बहिरेतत्त्रिकं द्विजः ।
महतोऽप्येनसो मासात् त्वचेवाहिर्विमुच्यते ॥ १३
एतयर्चा विसंयुक्ताः काले च क्रियया स्वया ।
विप्रक्षत्रियविड्जातिर्गर्हणां यान्ति साधुषु ॥ १४
ओङ्कारपूर्व्विकास्तिस्रो महाव्याहृतयोऽव्ययाः ।
त्रिपदा चैव गायत्री विज्ञेयं ब्रह्मणो मुखम् ॥ १५
योऽधीतेऽहन्यहन्येतां त्रीणि वर्षाण्यतन्द्रितः ।
स ब्रह्म परमभ्येति वायुभूतः खमूर्त्तिमान् ॥ १६
एकाक्षरं परं ब्रह्म प्राणायामः परं तपः ।
सावित्र्यास्तु परं नास्ति मौनात् सत्यं विशिष्यते ॥ १७
क्षरन्ति सर्व्ववैदिक्यो जुहोति-यजति-क्रियाः ।
अक्षरन्त्वक्षयं ज्ञेयं ब्रह्मा चैव प्रजापतिः ॥ १८
विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः ।
उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः ॥ १९
ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः ।
सर्व्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥ २०
जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः ।
कुर्य्यादन्यन्नवा कुर्य्यान्मैत्रो ब्राह्मण उच्यते ॥ २१
इति वैष्णवे धर्म्मशास्त्रे पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

---

## षट्पञ्चाशोऽध्यायः ।

अथातः सर्व्ववेदपवित्राणि भवन्ति ॥ १ ॥ येषां जपैश्च होमैश्च द्विजातयः पापेभ्यः पूयन्ते ॥ २ ॥ अघमर्षणम् ॥ ३ ॥ देवकृतम् ॥ ४ ॥ शुद्धवत्यः ॥ ५ ॥ तरत्समन्दीयम् ॥ ६ ॥ कूष्माण्ड्यः ॥ ७ ॥ पावमान्यः ॥ ८ ॥ दुर्गासावित्री ॥ ९ ॥ अतीषङ्गाः ॥

१० ॥ पदस्तोभाः ॥ ११ ॥ सामानि व्याहृतयः ॥ १२ ॥ भारुण्डानि ॥ १३ ॥ चन्द्रसाम ॥ १४ ॥ पुरुषव्रते सामनी ॥ १५ ॥ अब्लिङ्गम् ॥ १६ ॥ बार्हस्पत्यम् ॥ १७ ॥ गोसूक्तम् ॥ १८ ॥ अश्वसूक्तम् ॥ १९ ॥ सामनी चन्द्रसूक्ते च ॥ २० ॥ शतरुद्रियम् ॥ २१ ॥ अथर्वशिरः ॥ २२ ॥ त्रिसुपर्णम् ॥ २३ ॥ महाव्रतम् ॥ २४ ॥ नारायणीयम् ॥ २५ ॥ पुरुषसूक्तञ्च ॥ २६ ॥

त्रीण्याज्यदोहानि रथन्तरञ्च
अग्निव्रतं वामदेवं बृहच्च ।
एतानि गीतानि पुनन्ति जन्तून्
जातिस्मरत्वं लभते य इच्छेत् ॥ २७

इति वैष्णवे धर्मशास्त्रे षट्पञ्चाशोऽध्यायः ॥५६

## सप्तपञ्चाशोऽध्यायः ।

अथ त्याज्याः ॥ १ ॥ व्रात्याः ॥ २ ॥ पतिताः ॥ ३ ॥ त्रिपुरुषं मातृतः पितृतश्चाशुद्धाः ॥ ४ ॥ सर्व एवाभोज्याश्चाप्रतिग्राह्याः ॥ ५ ॥ अप्रतिग्राह्येभ्यश्च प्रतिग्रहप्रसङ्गं वर्जयेत् ॥ ६ ॥ प्रतिग्रहेण ब्राह्मणानां ब्राह्मं तेजः प्रणश्यति ॥ ७ ॥ द्रव्याणां चाविज्ञाय प्रतिग्रहविधिं यः प्रतिग्रहं कुर्यात् स दात्रा सह निमज्जति ॥ ८ ॥ प्रतिग्रहसमर्थश्च यः प्रतिग्रहं वर्जयेत् स दातृलोकमाप्नोति ॥ ९ ॥ एधोदकमूलफलाभयामिष-मधुशय्यासनगृहपुष्पदधिशाकांश्चाभ्युद्यतान् न निर्णुदेत् ॥ १० ॥

आहूयाभ्युद्यतां भिक्षां पुरस्तादप्रचोदिताम् ।
मेने प्रजापतिर्ग्राह्यामपि दुष्कृतकर्मणः ॥ ११
नाश्नन्ति पितरस्तस्य दश वर्षाणि पञ्च च ।
न च हव्यं वहत्यग्निर्यस्तामभ्यवमन्यते ॥ १२
गुरून् भृत्यांश्चोज्जिहीर्षन्नर्चिष्यन् पितृदेवताः ।
सर्वतः प्रतिगृह्णीयात् न तु तृप्येत् स्वयं ततः ॥ १३
एतेष्वपि च कार्येषु समर्थस्तत्प्रतिग्रहे ।
नादद्यात् कुलटाषण्ढपतितेभ्यस्तथा द्विषः ॥ १४
गुरुषु त्वभ्यतीतेषु विना वा तैर्गृहे वसन् ।
आत्मनो वृत्तिमन्विच्छन् गृह्णीयात् साधुतः सदा ॥ १५
आर्द्धिकः कुलमित्रञ्च दासगोपालनापिताः ।
एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत् ॥ १६

इति वैष्णवे धर्मशास्त्रे सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

## अष्टपञ्चाशोऽध्यायः ।

अथ गृहाश्रमिणस्त्रिविधोऽर्थो भवति ॥ १ ॥ शुक्लः शबलोऽसितश्च ॥ २ ॥ शुक्लेनार्थेन यदौर्द्ध्वदेहिकं करोति तद्देवत्वमासादयति ॥ ३ ॥ शबलेन तन्मानुष्यम् ॥ ४ ॥ यत् कृष्णेन तत् तिर्यक्त्वम् ॥ ५ ॥ स्ववृत्त्युपार्जितं सर्वेषां सर्वं शुक्लम् ॥ ६ ॥ अनन्तरवृत्त्युपात्तं शबलम् ॥ ७ ॥ एकान्तरितवृत्त्युपात्तञ्च कृष्णम् ॥ ८ ॥

क्रमागतं प्रीतिदायः प्राप्तञ्च सह भार्यया ।
अविशेषेण सर्वेषां धनं शुक्लं प्रकीर्त्तितम् ॥ ९
उत्कोचशुल्कसम्प्राप्तमविक्रेयस्य विक्रये ।
कृतोपकारादाप्तञ्च शबलं समुदाहृतम् ॥ १०
पार्श्विकद्यूतचौर्य्याप्त-प्रतिरूपकसाहसैः ।
व्याजेनोपार्जितं यच्च तत् कृष्णं समुदाहृतम् ॥ ११
यथाविधेन द्रव्येण यत्किञ्चित् कुरुते नरः ।
तथाविधमवाप्नोति स फलं प्रेत्य चेह च ॥ १२

इति वैष्णवे धर्मशास्त्रेऽष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

## एकोनषष्टितमोऽध्यायः ।

गृहाश्रमी वैवाहिकाग्नौ पाकयज्ञान् कुर्वीत ॥ १ ॥ सायं प्रातश्चाग्निहोत्रम् ॥ २ ॥ देवताभ्यो जुहुयात् ॥ ३ ॥ चन्द्रार्कसन्निकर्षविप्रकर्षयोर्दर्शपूर्णमासाभ्यां यजेत ॥ ४ ॥ प्रत्ययनं पशुना ॥ ५ ॥ शरद्ग्रीष्मयोश्चाग्रयणेन ॥ ६ ॥ व्रीहियवयोश्च पाके ॥ ७ ॥ त्रैवार्षिकाभ्यधिकान्नः ॥ ८ ॥ प्रत्यब्दं सोमेन ॥ ९ ॥ वित्ताभावे इष्ट्या वैश्वानर्य्या ॥ १० ॥ शुमाक-[illegible]भागे परिचरेत् ॥ ११ ॥ सर्वार्थं सिद्धमन्नमा[illegible]

सकृदेव वितरेत् ॥ १२ ॥ सायं प्रातर्वैश्वदेवं जुहुयात् ॥ १३ ॥ भिक्षाञ्च भिक्षवे दद्यात् ॥ १४ ॥ अर्च्चितभिक्षादानेन गोदानफलमवाप्नोति ॥ १५ ॥ भिक्ष्वभावे तन्मात्रं गवां दद्यात् ॥ १६ ॥ वह्नौ वा प्रक्षिपेत् ॥ १७ ॥ भुक्तेऽप्यन्ने विद्यमाने न भिक्षुकं प्रत्याचक्षीत ॥ १८ ॥ कण्डनी पेषणी चुल्ली कुम्भ उपस्कर इति पञ्चसूना गृहस्थस्य ॥ १९ ॥ तन्नि-र्हरणार्थञ्च ब्रह्मदेवभूतपितृनरयज्ञान् कुर्य्यात् ॥ २० ॥ स्वाध्यायो ब्रह्मयज्ञः ॥ २१ ॥ होमो दैवः ॥ २२ ॥ बलिर्भौतः ॥ २३ ॥ पितृतर्पणं पित्र्यः ॥ २४ ॥ नृयज्ञश्चातिथिपूजनम् ॥ २५ ॥

देवतातिथिभृत्यानां पितॄणामात्मनस्तथा ।
न निर्वपति पञ्चानामुच्छ्वसन् न स जीवति ॥ २६

ब्रह्मचारी यतिर्भिक्षुर्जीवन्त्यते गृहाश्रमात् ।
तस्मादभ्यागतानेतान् गृहस्थो नावमानयेत् ॥ २७

गृहस्थ एव यजते गृहस्थस्तप्यते तपः ।
ददाति च गृहस्थस्तु तस्माच्छ्रेष्ठो गृहाश्रमी ॥ २८

ऋषयः पितरो देवा भूतान्यतिथयस्तथा ।
आशासते कुटुम्बिभ्यस्तस्माच्छ्रेष्ठो गृहाश्रमी ॥ २९

त्रिवर्गसेवां सततान्नदानं
सुरार्चनं ब्राह्मणपूजनञ्च ।
स्वाध्यायसेवां पितृतर्पणञ्च
कृत्वा गृही शक्रपदं प्रयाति ॥ ३०

इति वैष्णवे धर्म्मशास्त्रे एकोनषष्टितमोऽध्यायः ॥ ५९

---

## षष्टितमोऽध्यायः ।

ब्राह्मे मुहूर्त्ते उत्थाय मूत्रपुरीषोत्सर्गं कुर्यात् ॥ १ ॥ दक्षिणाभिमुखो रात्रौ दिवा चोदङ्मुखः सन्ध्य-योश्च ॥ २ ॥ नाप्रच्छादितायां भूमौ ॥ ३ ॥ न फालकृष्टायाम् ॥ ४ ॥ न छायायाम् ॥ ५ ॥ न ऊषरे ॥ ६ ॥ न शाद्वले ॥ ७ ॥ न ससत्त्वे ॥ ८ ॥ न गर्त्ते ॥ ९ ॥ न वल्मीके ॥ १० ॥ न पथि ॥ ११ ॥ न रथ्यायाम् ॥ १२ ॥ न परशुचौ ॥ १३ ॥ नो-द्याने ॥ १४ ॥ नोद्यानोदकसमीपयोः ॥ १५ ॥ नाङ्गारे ॥ १६ ॥ न भस्मनि ॥ १७ ॥ न गोमये ॥ १८ ॥ न गोव्रजे ॥ १९ ॥ नाकाशे ॥ २० ॥ नोदके ॥ २१ ॥ न प्रत्यनिलानलेन्द्वर्कस्त्रीगुरुब्राह्मणानाञ्च ॥ २२ ॥ नैवावगुण्ठितशिराः ॥ २३ ॥ लोष्टकाभिः परिमृज्य गुदं गृहीतशिश्नश्चोत्थायाद्भिरद्भिश्चोद्धृताभि-र्गन्धलेपक्षयकरं शौचं कुर्य्यात् ॥ २४ ॥

एका लिङ्गे गुदे तिस्रस्तथैकत्र करे दश ।
उभयोः सप्त दातव्या मृदस्तिस्रस्तु पादयोः ॥ २५

एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।
त्रिगुणञ्च वनस्थानां यतीनाञ्च चतुर्गुणम् ॥ २६

इति वैष्णवे धर्म्मशास्त्रे षष्टितमोऽध्यायः ॥ ६० ॥

---

## एकषष्टितमोऽध्यायः ।

अथ पलाशं दन्तधावनं नाद्यात् ॥ १ ॥ नै-श्लेष्मान्तकारिष्टविभीतकधवधन्वनजम् ॥ २ ॥ न बन्धूकनिर्गुण्डीशिग्रुतिल्वतिन्दुकजम् ॥ ३ ॥ न कोविदारशमीपीलुपिप्पलेङ्गुदगुग्गुलुजम् ॥ ४ ॥ न पारिभद्रकाम्लिकामोचकशाल्मलीशणजम् ॥ ५ ॥ न मधुरम् ॥ ६ ॥ नाम्लम् ॥ ७ ॥ नोर्द्ध्वशुष्कम् ॥ ८ ॥ न शुषिरम् ॥ ९ ॥ न पूतिगन्धि ॥ १० ॥ न पिच्छिलम् ॥ ११ ॥ न दक्षिणापराभिमुखः ॥ १२ ॥ अद्याचोदङ्मुखः प्राङ्मुखो वा ॥ १३ ॥ वटासनार्क-खदिर-करञ्ज-बदरसर्ज्ज-निम्बारिमेद-पामार्ग-मालती-ककुभबिल्वानामन्यतमम् ॥ १४ ॥ कषायं तिक्त-कटुकञ्च ॥ १५ ॥

कनीन्यग्रसमस्थौल्यं सकूर्चं द्वादशाङ्गुलम् ।
प्रातर्भुक्त्वा च यतवाग्भक्षयेद्दन्तधावनम् ॥ १६

प्रक्षाल्य भुक्त्वा तज्जह्याच्छुचौ देशे प्रयत्नतः ।
अमावास्यां न चाश्नीयाद्दन्तकाष्ठं कदाचन ॥ १७

इति वैष्णवे धर्म्मशास्त्रे एकषष्टितमोऽध्यायः ॥ ६१

---

## द्विषष्टितमोऽध्यायः।

अथ द्विजातीनां कनीष्ठिकामूले प्राजापत्यं नाम तीर्थम् ॥ १ ॥ अङ्गुष्ठमूले ब्राह्मम् ॥ २ ॥ अङ्गुल्यग्रे दैवम् ॥ ३ ॥ तर्ज्जनीमूले पित्र्यम् ॥ ४ ॥ अनच्चुष्णाभिरफेनिलाभिर्न शूद्रैककरावर्ज्जिताभिरक्षाराभिरद्भिः शुचौ देशे स्वासीनोऽन्तर्जानुः प्राङ्मुखोदङ्मुखो वा तन्मनाः सुमनास्त्वाचामेत् ॥ ५ ॥ ब्राह्मेण तीर्थेन त्रिराचामेत् ॥ ६ ॥ द्विः प्रमृज्यात् ॥ ७ ॥ खान्यद्भिर्मूर्द्धानं हृदयं स्पृशेत् ॥ ८

हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः।
शुध्येरन् स्त्री च शूद्रश्च सकृत् स्पृष्टाभिरन्ततः॥ ९

इति वैष्णवे धर्म्मशास्त्रे द्विषष्टितमोऽध्यायः॥ ६२॥

---

## त्रिषष्टितमोऽध्यायः।

अथ योगक्षेमार्थमीश्वरमुपगच्छेत् ॥ १ ॥ नैकोऽध्वानं प्रपद्येत ॥ २ ॥ नाधार्म्मिकैः सार्द्धम् ॥ ३ ॥ न वृषलैः ॥ ४ ॥ न द्विषद्भिः ॥ ५ ॥ नातिप्रत्यूषसि ॥ ६ ॥ नातिसायम् ॥ ७ ॥ न सन्ध्ययोः ॥ ८ ॥ न मध्याह्ने ॥ ९ ॥ न सन्निहितपानीयम् ॥ १० ॥ नातितूर्णम् ॥ ११ ॥ न रात्रौ ॥ १२ ॥ न सततं व्यालव्याधितार्त्तैर्वाहनैः ॥ १३ ॥ न हीनाङ्गैः ॥ १४ ॥ न दीनैः ॥ १५ ॥ न गोभिः ॥ १६ ॥ नादान्तैः ॥ १७ ॥ यवसोदके वाहनानामदत्त्वात्मनः क्षुत्पिपासापनोदनं न कुर्य्यात् ॥ १८ ॥ न चतुष्पथमधितिष्ठेत् ॥ १९ ॥ न रात्रौ वृक्षमूलम् ॥ २० ॥ न शून्यालयम् ॥ २१ ॥ न वनम् ॥ २२ ॥ न पशूनां बन्धनागारम् ॥ २३ ॥ न केशतुषकपालास्थिभस्माङ्गारान् ॥ २४ ॥ न कार्पासास्थि ॥ २५ ॥ चतुष्पथं प्रदक्षिणीकुर्य्यात् ॥ २६ ॥ दैवतानि च ॥ २७ ॥ प्रज्ञातांश्च वनस्पतीन् ॥ २८ ॥ अग्निब्राह्मणगणिकापूर्णकुम्भादर्शच्छत्रध्वजपताकाश्रीवृक्षवर्द्धमाननन्द्यावर्त्तांश्च ॥ २९ तालवृन्त-चामराश्व-गजाजगोदधिक्षीर-मधुसिद्धार्थकांश्च ॥ ३० ॥ वीणाचन्दनायुधार्द्रगोमयपुष्पशाकगोरोचनादूर्व्वाप्ररोहांश्च ॥ ३१ ॥ उष्णीषालङ्कारमणिकनक-रजत-वस्त्रासन-यानामिषांश्च ॥ ३२ ॥ भृङ्गारोद्धृतोर्व्वरारज्जुबद्धैकपशुकुमारीमीनांश्च दृष्ट्वा प्रयायादिति ॥ ३३ ॥ अथ मत्तोन्मत्तव्यङ्गान् दृष्ट्वा निवर्त्तेत ॥ ३४ ॥ वान्तविरिक्त-मुण्डित-मलिन-वसनजटिलवामनांश्च ॥ ३५ ॥ काषायिप्रव्रजितमलिनांश्च ॥ ३६ ॥ तैलगुडशुष्कगोमयेन्धनतृणपलाशभस्माङ्गारांश्च ॥ ३७ ॥ लवणक्लीवासवनपुंसककार्पासरज्जुनिगडमुक्तकेशांश्च ॥ ३८ ॥ वीणाचन्दनार्द्रशाकोष्णीषालङ्कारकुमारीः प्रस्थानकालेऽभिनन्दयेदिति ॥ ३९ ॥ देवब्राह्मणगुरुबभ्रुदीक्षितानां छायां नाक्रामेत् ॥ ४० ॥ निष्ठ्यूतवान्तरुधिरविण्मूत्रस्नानोदकानि च ॥ ४१ ॥ न वत्सतन्त्रीं लङ्घयेत् ॥ ४२ ॥ प्रवर्षति न धावेत् ॥ ४३ ॥ न वृथा नदीं तरेत् ॥ ४४ ॥ न देवताभ्यः पितृभ्यश्चोदकमप्रदाय ॥ ४५ ॥ न बाहुभ्याम् ॥ ४६ ॥ न भिन्नया नावा ॥ ४७ । न कूल(कूल)मधितिष्ठेत् ॥ ४८ ॥ न कूपमवलोकयेत् ॥ ४९ ॥ न लङ्घयेत् ॥ ५० ॥

वृद्धभारिनृपस्नात-स्त्रीरोगिवरचक्रिणाम्।
पन्था देयो नृपस्तेषां मान्यः स्नातश्च भूपतेः॥ ५१

इति वैष्णवे धर्म्मशास्त्रे त्रिषष्टितमोऽध्यायः॥ ६३॥

---

## चतुःषष्टितमोऽध्यायः।

परनिपानेषु न स्नानमाचरेत् ॥ १ ॥ आचरेत् पञ्चपिण्डानुद्धृत्यापस्त्वापदि ॥ २ ॥ नाजीर्णे ॥ ३ ॥ न चातुरः ॥ ४ ॥ न नग्नः ॥ ५ ॥ न रात्रौ ॥ ६ ॥ नाहुदयंनवर्ज्जम् ॥ ७ ॥ न सन्ध्ययोः ॥ ८ ॥ प्रातःकाय्यवयकिरणपत्नीं प्राचीमवलोक्य स्नायात् ॥ ९ ॥ स्नातः शिरो नावधूनुयात् ॥ १० ॥ नाङ्गेभ्यस्तोयमुद्धरेत् ॥ ११ ॥ न तैलवत् संस्पृशेत् ॥ १२ ॥ नाप्रक्षालितं पूर्व्वधृतं वसनं बिभृयात् ॥ १३ ॥ स्नातः सोष्णीषो धौत-

वाससी बिभृयात् ॥ १४ ॥ न म्लेच्छान्त्यजपतितैः सह सम्भाषणं कुर्यात् ॥ १५ ॥ स्नायात् प्रस्रवण-देवखातसरोवरेषु ॥ १६ ॥ उद्धृताद्भूमिष्ठमुदकं पुण्यं स्थावरात् प्रस्रवत् तस्मान्नादेयं तस्मादपि साधुपरिगृहीतं सर्वत एव गाङ्गम् ॥ १७ ॥ जलतोयैः कृतमलापकर्षोऽप्सु निमग्न आपो हि ष्ठेति तिसृभि-र्हिरण्यवर्णा इति चतसृभिरिदमापः प्रवहत इति च तीर्थमभिमन्त्रयेत् ॥ १८ ॥ ततोऽप्सु निमग्न-स्त्रिरघमर्षणं जपेत् ॥ १९ ॥ तद्विष्णोः परमं पद-मिति वा ॥ २० ॥ द्रुपदां सावित्रीं वा ॥ २१ ॥ युञ्जते मन इत्यनुवाकं वा ॥ २२ ॥ पुरुषसूक्तं वा ॥ २३ ॥ स्नातश्चार्द्रवासा देवपितृतर्पणमम्भःस्थ एव कुर्यात् ॥ २४ ॥ परिवर्तितवासाश्च तीर्थमुत्तीर्य ॥ २५ ॥ अस्नात्वा देवपितृतर्पणं स्नानशाटीं न पीडयेत् ॥ २६ ॥ स्नात्वाचम्य विधिवदुपस्पृशेत् ॥ २७ ॥ पुरुषसूक्तेन प्रत्यृचं पुरुषाय पुष्पाणि दद्यात् ॥ २८ ॥ उदकाञ्जलिं पश्चात् ॥ २९ ॥ आदावेव दिव्येन तीर्थेन देवतानां कुर्यात् ॥ ३० ॥ तदनन्तरं पित्र्येण पितॄणाम् ॥ ३१ ॥ तत्रादौ स्ववंश्यानां तर्पणं कुर्यात् ॥ ३२ ॥ ततः सम्बन्धिबान्धवानाम् ॥ ३३ ॥ ततः सुहृदाम् ॥ ३४ ॥ एवं नित्यस्नायी स्यात् ॥ ३५ ॥ स्नातश्च पवित्राणि यथाशक्ति जपेत् ॥ ३६ ॥ विशेषतः सावित्रीमष्टवारं जपेत् ॥ ३७ ॥ पुरुषसूक्तञ्च ॥ ३८ ॥ नैताभ्यामधिकमस्ति ॥ ३९ ॥

स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि ।
पवित्राणां तथा जप्ये दाने च विधिनोदिते ॥ ४०
अलक्ष्मीः कालकर्णी च दुःस्वप्नं दुर्विचिन्तितम् ।
अम्भसाभिषिक्तस्य नश्यन्त इति धारणा ॥ ४१
याम्यं हि यातनादुःखं नित्यस्नायी न पश्यति ।
नित्यस्नानेन पूयन्ते येऽपि पापकृतो नराः ॥ ४२

इति वैष्णवे धर्मशास्त्रे चतुःषष्टितमोऽध्यायः ॥६४॥

---

## पञ्चषष्टितमोऽध्यायः ।

अथातः स्नातः सुप्रक्षालितपाणिपादः स्वाचान्तो देवतार्चायां स्थले वा भगवन्तमनादिनिधनं वासुदेव-मभ्यर्चयेत् ॥ १ ॥ अश्विनोः प्राणस्तौ इति जीवादानं दत्त्वा युञ्जते मन इत्यनुवाकेनावाहनं कृत्वा जानुभ्यां पाणिभ्यां शिरसा च नमस्कारं कुर्यात् ॥ २ ॥ आपो हि ष्ठेति तिसृभिरर्घ्यं निवेदयेत् ॥ ३ ॥ हिरण्यवर्णा इति चतसृभिः पाद्यम् ॥ ४ ॥ शन्न आपो धन्वन्या इत्याचमनीयम् ॥ ५ ॥ इदमापः प्रवहत इति स्नानीयम् ॥ ६ ॥ रथे अक्षेषु वृषभराजा इत्यनुलेपनालङ्कारौ ॥ ७ ॥ युवा सुवासा इति वासः ॥ ८ ॥ पुष्पावतीरिति पुष्पम् ॥ ९ ॥ धूरसि धूर्वमिति धूपम् ॥ १० ॥ तेजोऽसि शुक्रमिति दीपम् ॥ ११ ॥ दधिक्राव्ण इति मधुपर्कः ॥ १२ ॥ हिरण्यगर्भ इत्यष्टाभिर्नैवेद्यम् ॥ १३ ॥

चामरं व्यजनं मात्रं छत्रं यानासने तथा ।
सावित्रेणैव तत् सर्वं देवाय विनिवेदयेत् ॥ १४
एवमभ्यर्च्य च जपेत् सूक्तं वै पौरुषं ततः ।
तेनैव जुहुयादाज्यं स इच्छेच्छाश्वतं पदम् ॥ १५

इति वैष्णवे धर्मशास्त्रे पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

---

## षट्षष्टितमोऽध्यायः ।

न नक्तं गृहीतेनोदकेन देवपितृकर्म कुर्यात् ॥ १ ॥ चन्दनकस्तूरिकामदागुरुदेवदारुकर्पूरकुङ्कुमजातीफलवर्ज्यमनु-लेपनं न दद्यात् ॥ २ ॥ न वासो नीलीरक्तम् ॥ ३ ॥ न मणिसुवर्णयोः प्रतिरूपमलङ्करणम् ॥ ४ ॥ नोग्र-गन्धि ॥ ५ ॥ नागन्धि ॥ ६ ॥ न कण्टकिजम् ॥ ७ ॥ कण्टकिजमपि शुक्लं सुगन्धिकं दद्यात् ॥ ८ ॥ रक्तमपि कुङ्कुमं जलजञ्च दद्यात् ॥ ९ ॥ न धूपार्थे जीवजातम् ॥ १० ॥ न घृततैलं विना किञ्चन दीपार्थे ॥ ११ ॥ नाभक्ष्यं नैवेद्यार्थे ॥ १२ ॥ न भक्ष्येष्वप्यजामहिषीक्षीरं ॥ १३ ॥ पञ्चनखमत्स्य-वराहमांसानि च ॥ १४ ॥

प्रयतश्च शुचिर्भूत्वा सर्व्वमेव निवेदयेत्।
स्वमनाः सुमना भूत्वा त्वराक्रोधविवर्ज्जितः॥ १५

इति वैष्णवे धर्म्मशास्त्रे षट्षष्टितमोऽध्यायः॥ ६६॥

---

## सप्तषष्टितमोऽध्यायः।

अथाग्निं परिसमूह्य पर्य्युक्ष्य परिस्तीर्य्य परिषिच्य सर्व्वतः पाकादग्रमुद्धृत्य जुहुयात्॥ १॥ वासुदेवाय सङ्कर्षणाय प्रद्युम्नायानिरुद्धाय पुरुषाय सत्यायाच्युताय वासुदेवाय॥ २॥ अथाग्नये सोमाय मित्राय वरुणाय इन्द्रायेन्द्राग्निभ्यां विश्वेभ्यो देवेभ्यः प्रजापतये अनुमत्यै धन्वन्तरये वास्तोष्पतये अग्नये स्विष्टिकृते च॥ ३॥ ततोऽन्नशेषेण बलिमुपहरेत्॥ ४॥ भक्ष्योपभक्ष्याभ्याम्॥ ५॥ अम्भितः पूर्व्वाग्नेः॥ ६॥ अम्बानामासीति दुलानामासीति नितत्नीनामासीति चुपुणिकानामासीति सर्व्वासाम्॥ ७॥ नन्दिनि सुभगे सुमङ्गलि भद्रकालीति स्वस्थिध्वभिप्रदक्षिणम्॥ ८॥ स्थूणायां ध्रुवायां श्रियै। हिरण्यकेश्यै वनस्पतिभ्यश्च॥ ९॥ धर्म्माधर्म्मयोर्द्वारि मृत्यवे च॥ १०॥ उदधाने वरुणाय॥ ११॥ विष्णव इत्युलूखले॥ १२॥ मरुद्भ्य इति दृषदि॥ १३॥ उपरिशरणे वैश्रवणाय राज्ञे भूतेभ्यश्च॥ १४॥ इन्द्रायेन्द्रपुरुषेभ्य इति पूर्व्वार्द्धे॥ १५॥ यमाय यमपुरुषेभ्य इति दक्षिणार्द्धे॥ १६॥ वरुणाय वरुणपुरुषेभ्य इति पश्चार्द्धे॥ १७॥ सोमाय सोमपुरुषेभ्य इत्युत्तरार्द्धे॥ १८॥ ब्रह्मणे ब्रह्मपुरुषेभ्य इति मध्ये॥ १९॥ ऊर्द्ध्वमाकाशाय॥ २०॥ दिवाचरेभ्यो भूतेभ्य इति स्थण्डिले॥ २१॥ नक्तञ्चरेभ्य इति नक्तम्॥ २२॥ ततो दक्षिणाग्रेषु दर्भेषु पित्रे पितामहाय प्रपितामहाय मात्रे पितामह्यै प्रपितामह्यै स्वनामगोत्राभ्याञ्च पिण्डनिर्व्वपणं कुर्य्यात्॥ २३॥ पिण्डानाञ्चानुलेपनपुष्पधूपनैवेद्यादि दद्यात्॥ २४॥ उदककलशमुपनिधाय स्वस्त्ययनं वाचयेत्॥ २५॥ श्वकाकश्वपचानां भुवि निर्व्वपेत्॥ २६॥ भिक्षाञ्च दद्यात्॥ २७॥ अतिथिपूजने च परं यत्नमातिष्ठेत्॥ २८॥ सायमतिथिं प्राप्तं प्रयत्नेनार्च्चयेत्॥ २९॥ अनाशितमतिथिं गृहे न वासयेत्॥ ३०॥ यथा वर्णानां ब्राह्मणः प्रभुर्यथा स्त्रीणां भर्त्ता तथा गृहस्थस्यातिथिः॥ ३१॥ तत्पूजायां स्वर्गमाप्नोति॥ ३२॥

अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते।
तस्मात् सुकृतमादाय दुष्कृतन्तु प्रयच्छति॥ ३३
एकरात्रं हि निवसन्नतिथिर्ब्राह्मणः स्मृतः।
अनित्या हि स्थितिर्यस्मात् तस्मादतिथिरुच्यते॥ ३४॥
नैकग्रामीणमतिथिं विप्रं साङ्गतिकं तथा।
उपस्थितं गृहे विद्याद्भार्य्या यत्राग्नयोऽपि वा॥ ३५
यदि त्वतिथिधर्म्मेण क्षत्रियो गृहमागतः।
भुक्तवत्सु च विप्रेषु कामं तमपि भोजयेत्॥ ३६
वैश्यशूद्रावपि प्राप्तौ कुटुम्बेऽतिथिधर्म्मिणौ।
भोजयेत् सह भृत्यैस्तावानृशंस्यं प्रयोजयन्॥ ३७
इतरानपि सख्यादीन् सम्प्रीत्या गृहमागतान्।
प्रकृतान्नं यथाशक्ति भोजयेत् सह भार्य्यया॥ ३८
सुवासिनीं कुमारीञ्च रोगिणीं गुर्व्विणीं तथा।
अतिथिभ्योऽग्र एवैतान् भोजयेदविचारयन्॥ ३९
अदत्त्वा यस्तु एतेभ्यः पूर्व्वं भुङ्क्तेऽविचक्षणः।
स भुञ्जानो न जानाति श्वगृध्रैर्जग्धिमात्मनः॥ ४०
भुक्तवत्सु च विप्रेषु भृत्येषु स्वेषु चैव हि।
भुञ्जीयातां ततः पश्चादवशिष्टन्तु दम्पती॥ ४१
देवान् पितॄन् मनुष्यांश्च भृत्यान् गृह्याश्च देवताः।
पूजयित्वा ततः पश्चाद्गृहस्थः शेषभुग्भवेत्॥ ४२
अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात्।
यज्ञशिष्टाशनं ह्येतत् सतामन्नं विधीयते॥ ४३
स्वाध्यायेनाग्निहोत्रेण यज्ञेन तपसा तथा।
न चाप्नोति गृही लोकान् यथा त्वतिथिपूजनात्॥ ४४
सायंप्रातस्त्वतिथये प्रदद्यादासनोदके।
अन्नञ्चैव यथाशक्त्या सत्कृत्य विधिपूर्व्वकम्॥ ४५
प्रतिश्रयं तथा शय्यां पादाभ्यङ्गं सदीपकम्।
प्रत्येकदानेनाप्नोति गोप्रदानसमं फलम्॥ ४६

इति वैष्णवे धर्म्मशास्त्रे सप्तषष्टितमोऽध्यायः॥ ६७॥

## अष्टषष्टितमोऽध्यायः ।

चन्द्रार्कोपरागे नाश्नीयात् ॥ १ ॥ स्नात्वा मुक्तयोरश्नीयात् ॥ २ ॥ अमुक्तयोरस्तंगतयोर्दृष्ट्वा स्नात्वा चापरेऽह्नि ॥ ३ ॥ न गोब्राह्मणोपरागेऽश्नीयात् ॥ ४ ॥ न राज्यव्यसने ॥ ५ ॥ प्रवसिताग्निहोत्री यदाग्निहोत्रं हुतं मन्येत तदाश्नीयात् ॥ ६ ॥ यदा हुतं मन्येत वैश्वदेवमपि ॥ ७ ॥ पर्व्वणि च यदा कृतं मन्येत पर्व्व ॥ ८ ॥ नाश्नीयादजीर्णे ॥ ९ ॥ नार्द्धरात्रे ॥ १० ॥ न मध्याह्ने ॥ ११ ॥ न सन्ध्ययोः ॥ १२ ॥ नार्द्रवासाः ॥ १३ ॥ नैकवासाः ॥ १४ ॥ न नग्नः ॥ १५ ॥ न जलस्थः ॥ १६ ॥ नोत्कुटकः ॥ १७ ॥ न भिन्नासनगतः ॥ १८ ॥ न च शयनगतः ॥ १९ ॥ न भिन्नभाजने ॥ २० ॥ नोत्सङ्गे ॥ २१ ॥ न भुवि ॥ २२ ॥ न पाणौ ॥ २३ ॥ लवणञ्च यत्र दद्यात् तन्नाश्नीयात् ॥ २४ ॥ न बालकान् निर्भर्त्सयन् ॥ २५ ॥ नैको मिष्टम् ॥ २६ ॥ नोद्धृतस्नेहम् ॥ २७ ॥ न दिवा धानाः ॥ २८ ॥ न रात्रौ तिलसंयुक्तम् ॥ २९ ॥ न दधि सक्तून् ॥ ३० ॥ न कोविदारवटपिप्पलशणशाकम् ॥ ३१ ॥ नादत्त्वा ॥ ३२ ॥ नाहुत्वा ॥ ३३ ॥ नानार्द्रपादः ॥ ३४ ॥ नानार्द्रकरमुखश्च ॥ ३५ ॥ नोच्छिष्टश्च घृतमादद्यात् ॥ ३६ ॥ न चन्द्रार्कतारका निरीक्षेत ॥ ३७ ॥ न मूर्द्धानं स्पृशेत् ॥ ३८ ॥ न ब्रह्म कीर्त्तयेत् ॥ ३९ ॥ प्राङ्मुखोऽश्नीयात् ॥ ४० ॥ दक्षिणामुखो वा ॥ ४१ ॥ अभिपूज्यान्नम् ॥ ४२ ॥ सुमनाः स्रग्व्यनुलिप्तः ॥ ४३ ॥ न निःशेषकृत् स्यात् ॥ ४४ ॥ अन्यत्र दधिमधुसर्पिःपयःसक्तुपललमोदकेभ्यः ॥ ४५ ॥

नाश्नीयाद्भार्यया सार्द्धं नाकाशे न तथोत्थितः ।
बहूनां प्रेक्षमाणानां नैकस्मिन् बहवस्तथा ॥ ४६

शून्यागारे वह्निगृहे देवागारे कथञ्चन ।
पिबेन्नाञ्जलिना तोयं नातिसौहित्यमाचरेत् ॥ ४७

न तृतीयमथाश्नीयान्न चापथ्यं कथञ्चन ।
नातिप्रगे नातिसायं न सायं प्रातराशितः ॥ ४८

न भावदुष्टमश्नीयान्न भाण्डे भावदूषिते ।
शयानः प्रौढपादश्च कृत्वा चैवावसक्थिकाम् ॥ ४९

इति वैष्णवे धर्मशास्त्रेऽष्टषष्टितमोऽध्यायः ॥६८॥

---

## एकोनसप्ततितमोऽध्यायः ।

नाष्टमीचतुर्दशीपञ्चदशीषु स्त्रियमुपेयात् ॥ १ ॥ न श्राद्धं भुक्त्वा ॥ २ ॥ न श्राद्धं दत्त्वा ॥ ३ ॥ नोपनिमन्त्रितः श्राद्धे ॥ ४ ॥ ( न स्नात्वा न हुत्वा । ) न व्रती ॥ ५ ॥ ( नोपोष्य भुक्त्वा वा । ) न दीक्षितः ॥ ६ ॥ न देवायतनश्मशानशून्यालयेषु ॥ ७ ॥ न वृक्षमूलेषु ॥ ८ ॥ न दिवा ॥ ९ ॥ न सन्ध्ययोः ॥ १० ॥ न मलिनाम् ॥ ११ ॥ न मलिनः ॥ १२ ॥ नाभ्यक्ताम् ॥ १३ ॥ नाभ्यक्तः ॥ १४ ॥ न रोगार्त्ताम् ॥ १५ ॥ न रोगार्त्तः ॥ १६ ॥

न हीनाङ्गीं नाधिकाङ्गीं तथैव च वयोऽधिकाम् ।
नोपेयाद्गुर्व्विणीं नारीं दीर्घमायुर्जिजीविषुः ॥ १६

इति वैष्णवे धर्मशास्त्रे एकोनसप्ततितमोऽध्यायः॥६९

---

## सप्ततितमोऽध्यायः ।

नार्द्रपादः स्वप्यात् ॥ १ ॥ नोत्तरापरावाक्शिराः ॥ २ ॥ न नग्नः ॥ ३ ॥ नार्द्रवंशे ॥ ४ ॥ नाकाशे ॥ ५ ॥ न पलाशशयने ॥ ६ ॥ न पञ्चदारुकृते ॥ ७ ॥ न गजभग्नकृते ॥ ८ ॥ न विद्युद्दग्धकृते ॥ ९ ॥ न भिन्ने ॥ १० ॥ नाग्निप्लुष्टे ॥ ११ ॥ न घटाभिषिक्तद्रुमजे ॥ १२ ॥ न श्मशानशून्यालयदेवतायतनेषु ॥ १३ ॥ न चपलमध्ये ॥ १४ ॥ न नारीमध्ये ॥ १५ ॥ न धान्यगोगुरुहुताशनसुराणामुपरि ॥ १६ ॥

नोच्छिष्टो न दिवा स्वप्यात् सन्ध्ययोर्न न भस्मनि ।
देशे न चाशुचौ नार्द्रे न च पर्व्वतमस्तके ॥ १७

इति वैष्णवे धर्मशास्त्रे सप्ततितमोऽध्यायः ॥७०॥

## एकसप्ततितमोऽध्यायः ।

अथ न कञ्च नावमन्येत ॥ १ ॥ न च हीनाङ्गा-
[illegible]काङ्गान् मूर्खान् धनहीनानवहसेत् ॥ २ ॥ न
[illegible]नान् सेवेत ॥३॥ स्वाध्यायविरोधि कर्म्म नाचरेत् ॥
॥ वयोऽनुरूपं वेषं कुर्य्यात् ॥ ५ ॥ श्रुतस्या-
[illegible]भजनस्य धनस्य देशस्य च ॥ ६ ॥ नोद्धतः ॥ ७ ।
[illegible] ग्राम्यादावेची स्यात् ॥ ८ ॥ सति विभवे न
[illegible]मलवद्वासाः स्यात् ॥ ९ ॥ न नाक्षीत्वभिभा-
[illegible] ॥ १० ॥ न निर्गन्धोग्रगन्धि रक्तञ्च माल्यं
[illegible]यात् ॥ ११ ॥ बिभृयाज्जलजं रक्तमपि ॥ १२ ॥
[illegible] वैणवीम् ॥ १३ ॥ कमण्डलुञ्च सोदकम् ॥
[illegible] ॥ कार्पासमुपवीतम् ॥ १५ ॥ रौक्मे च कुण्डले ॥
[illegible] ॥ नादित्यमुद्यन्तमीक्षेत ॥ १७ ॥ नास्तं
[illegible]न्तम् ॥ १८ ॥ न वाससा तिरोहितम् ॥ १९ ॥ न
[illegible]दर्शजलमध्यगतम् ॥ २० ॥ न मध्याह्ने ॥ २१ ।
[illegible]कुद्धस्य गुरोर्मुखम् ॥२२॥ न तैलोदकयोः स्वच्छा-
[illegible]म् ॥ न मलवल्लादर्शं ॥ २४ ॥ न पत्नीं भोजन-
[illegible]नये ॥ २५ ॥ न स्त्रियं नग्नाम् ॥ २६ ॥ न कञ्चन
[illegible]हमानम् ॥ २७ ॥ न चालानबद्धकुञ्जरम् ॥ २८ ॥
च विषमस्थो वृषादियुद्धम् ॥ २९ ॥ नोन्मत्तम् ॥
[illegible] ॥ न मत्तम् ॥ ३१ ॥ नामेध्यमग्नौ प्रक्षिपेत् ॥
[illegible] ॥ नासृक् ॥ ३३ ॥ न विषम् ॥ ३४ ॥ नाप्-
[illegible]पि ॥ ३५ ॥ नाग्निं लङ्घयेत् ॥ ३६ ॥ न पादौ
[illegible]तापयेत् ॥ ३७ ॥ कुशेषु वा परिमृज्यात् ॥ ३८ ॥
कांस्यभाजने चापयेत् ॥ ३९ ॥ न पादं पादेन ॥
॥ न मुखमालिखेत् ॥ ४१ ॥ न लोष्टमर्द्दी
[illegible]तु ॥ ४२ ॥ न तृणच्छेदी स्यात् ॥ ४३ ॥ न दन्तै-
[illegible]लोमानि छिन्द्यात् ॥ ४४ ॥ द्यूतं वर्ज्जयेत् ॥
॥ बालातपसेवाञ्च ॥ ४६ ॥ वस्त्रोपानहमाल्यो-
[illegible]यान्यधृतानि न धारयेत् ॥ ४७ ॥ न शूद्राय मतिं
दद्यात् ॥ ४८ ॥ नोच्छिष्टहविषी ॥ ४९ ॥ न
[illegible]तु ॥ ५० ॥ न चास्योपदिशेद्धर्म्मम् ॥ ५१ ॥
[illegible]म् ॥ ५२ ॥ न संहताभ्यां पाणिभ्यां शिर
उदरञ्च कण्डूयेत् ॥ ५३ ॥ न दर्पितमनसो प्रत्या-
चक्षीत ॥ ५४ ॥ नात्मनः सत्त्वमपकर्षयेत् ॥ ५५ ॥
सुप्तं न प्रबोधयेत् ॥ ५६ ॥ नोदक्यामभिभाषेत ॥ ५८
न च्छायान्यासान् ॥ ५९ ॥ अग्निदेवब्राह्मणसन्निधौ
दक्षिणं पाणिमुद्धरेत् ॥ ६० ॥ न परस्मै परस्मै
नाम्ना चक्षीत ॥ ६१ ॥ न पिबन्तं वत्सकम् ॥ ६२ ॥
नोद्धतान् प्रवर्त्तयेत् ॥ ६३ ॥ न शूद्रराज्ये निवसेत् ॥
६४ ॥ नाधार्म्मिकजनाकीर्णे ॥ ६५ ॥ न संवसे-
द्वैद्यहीने ॥ ६६ ॥ नोपसृष्टे ॥ ६७ ॥ न चिरं
पर्व्वते ॥ ६८ ॥ न वृथाचेष्टां कुर्य्यात् ॥ ६९ ॥ न
नृत्यगीते ॥ ७० ॥ नास्फोटनकार्य्यम् ॥ ७१ ॥
नाश्लीलं कीर्त्तयेत् ॥ ७२ ॥ नानृतम् ॥ ७३ ॥ ना-
प्रियम् ॥ ७४ ॥ न कस्यचिन्मर्म्मणि स्पृशेत् ॥ ७५ ॥
नात्मानमवजानीयादादौर्घमायुर्जिजीविषुः ॥७६॥ चिरं
सन्ध्योपासनं कुर्य्यात् ॥ ७७ ॥ न सर्पशस्त्रैः क्रीडेत् ॥
७८ ॥ अनिमित्ततः खानि न स्पृशेत् ॥ ७९ ॥
परस्य दण्डं नोद्यच्छेत् ॥ ८० ॥ ग्राम्यं ग्रामशाखं
ताडयेत् ॥ ८१ ॥ देवब्राह्मणशास्त्रमहात्मनां परी-
वादं परिहरेत् ॥ ८२ ॥ धर्म्मविरुद्धौ चार्थकामौ ॥
८४ ॥ लोकविद्विष्टञ्च धर्म्ममपि ॥ ८५ ॥ पर्व्वसु
शान्तिहोमं कुर्य्यात् ॥ ८६ ॥ न तृणमपि
छिन्द्यात् ॥ ८७ ॥ अलङ्कृतश्च तिष्ठेत् ॥ ८८ ॥
एवमाचारसेवी स्यात् ॥८९

श्रुतिस्मृत्युदितं सम्यक् साधुभिश्च निषेवितम् ।
तमाचारं निषेवेत धर्म्मकामो जितेन्द्रियः ॥ ९०
आचाराल्लभते ह्यायुराचारादीप्सितां गतिम् ।
आचाराद्धनमक्षय्यमाचाराद्धन्त्यलक्षणम् ॥ ९१
सर्व्वलक्षणहीनोऽपि यः सदाचारवान् नरः ।
श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति ॥ ९२

इति वैष्णवे धर्म्मशास्त्रे एकसप्ततितमोऽध्यायः ॥ ७१

---

## द्विसप्ततितमोऽध्यायः ।

दमपरश्चैव तिष्ठेत् ॥ १ ॥ दमश्च त्रिषु लोकेषु प्रकी-
र्त्तितः ॥ २ ॥ दान्तस्यायं लोकः परश्च ॥ ३ ॥

नादान्तस्य क्रिया काचित् सम्पद्यति ॥ ४ ॥
दमः पवित्रं परमं मङ्गल्यं परमं दमः ।
दमेन सर्व्वमाप्नोति यत्किञ्चिन्मनसेच्छति ॥ ५ ॥

दशार्द्धयुक्तेन रथेन याति
मनोवशे[illegible]यथानुवर्त्तिना ।
तच्चेन्द्रियं नापहरन्ति वाजिन-
स्तथागतं नावसयन्ति शत्रवः ॥ ६ ॥
आपूर्य्यमाणमचलप्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत् कामा यं प्रविशन्ति सर्व्वे
स शान्तिमाप्नोति न कामकारी ॥

इति वैष्णवे धर्म्मशास्त्रे द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

---

## त्रिसप्ततितमोऽध्यायः ।

अथ श्राद्धेप्सुः पूर्व्वेद्युर्ब्राह्मणानामन्त्रयेत् ॥ १ ॥ द्वितीयेऽह्नि शुक्लपक्षस्य पूर्व्वाह्णे कृष्णपक्षस्यापराह्णे विप्रान् सुस्नातान् स्वाचान्तान् यथाभूयो विद्याक्रमेण कुशोत्तरेष्वासनेषूपवेशयेत् ॥ २ ॥ द्वौ दैवे प्राङ्मुखौ त्रींश्च पित्र्ये उदङ्मुखान् ॥ ३ ॥ एकैकमुभयत्र वा ॥ ४ ॥ अमश्राद्धेषु काम्येषु च प्रथमपञ्चकेनाग्निं हुत्वा ॥ ५ ॥ पशुश्राद्धेषु मध्यमपञ्चकेन ॥ ६ ॥ अमावास्यायामुत्तमपञ्चकेन ॥ ७ ॥ आग्रहायण्या ऊर्द्ध्वं कृष्णाष्टकासु च क्रमेणैव प्रथममध्यमोत्तमपञ्चकैः ॥ ८ ॥ अन्वष्टकासु च ॥ ९ ॥ ततो ब्राह्मणानुज्ञातः पितॄनावाहयेत् ॥ १० ॥ अपयान्त्वसुरा इति द्वाभ्यां तिलैर्यातुधानानां विसर्ज्जनं कृत्वा एत पितरः सर्व्वांस्तानग्न आ मे यन्तु तद्वः पितर इत्यावाहनं कृत्वा कुशतिलमिश्रेण गन्धोदकेन यास्तिष्ठन्त्यमृता वागिति यन्मे मातेति च पाद्यं निर्व्वर्त्त्य निवेद्यार्घं कृत्वा निवेद्य चानुलेपनं कृत्वा कुशतिलवस्त्रपुष्पालङ्कारधूपदीपैर्यथाशक्ति विप्रान् समभ्यर्च्य घृताक्तमन्नमादायादित्या रुद्रा वसव इति वीक्षमाणोऽवकाशीत्युक्त्वा तत्र विप्रैः कुर्व्वित्युक्ते आहुतित्रयं दद्यात् ॥ ११ ॥ ये मामकाः पितर एतद्वः पितरोऽयं यज्ञ इति च हविरनुमन्त्रणं कृत्वा यथोपपन्नेषु पात्रेषु विशेषाद्रजतमयेष्वन्नं नमो विश्वेभ्य इत्यन्नमादौ प्राङ्मुखयोर्निवेदयेत् ॥ १२ ॥ पित्रे पितामहाय प्रपितामहाय च नामगोत्राभ्यामुदङ्मुखेषु ॥ १३ ॥ तद्दत्तेषु ब्राह्मणेषु यन्मे प्रकामा अहोरात्रैर्यद् क्रव्यादिति जपेत् ॥ १४ ॥ इतिहासपुराणधर्म्मशास्त्राणि चेति ॥ १५ ॥ उच्छिष्टसन्निधौ दक्षिणाग्रेषु दर्भेषु पृथिवी दर्व्विरक्षितेत्येकं पिण्डं पित्रे निदध्यात् ॥ १६ ॥ अन्तरीक्षं दर्व्विरक्षितेति द्वितीयं पितामहाय ॥ १७ ॥ द्यौर्दर्व्विरक्षितेति तृतीयं प्रपितामहाय ॥ १८ ॥ येऽत्र पितरः प्रेता इति वासो देयम् ॥ १९ ॥ वीरान्नः पितरो धत्त इत्यन्नम् ॥ २० ॥ अत्र पितरो मादयध्वं यथाभागमावृषायध्वमिति दर्भमूले करघर्षणम् ॥ २१ ॥ ऊर्ज्जं वहन्तीरित्यनेन मोदकेन प्रदक्षिणं पिण्डानां विकिरणं सेचनं कृत्वा अर्घ्यपुष्पधूपालेपनान्नादिभक्ष्यभोज्यानि च निवेदयेत् ॥ २२ ॥ उदकपात्रं मधुघृततिलैः संयुतञ्च ॥ २३ ॥ भुक्तवत्सु ब्राह्मणेषु तृप्तिमागतेषु मा मे क्षेष्ठ्यन्नं महीमभ्युद्यान्नविकिरमुच्छिष्टाग्रतः कृत्वा तृप्ता भवन्तः सम्पन्नमिति पृष्ट्वोदङ्मुखेष्वाचमनमादौ दत्त्वा ततः प्राङ्मुखेषु दत्त्वा ततश्च सुप्रोक्षितमिति श्राद्धदेशं सम्प्रोक्ष्य दर्भपाणिः सर्व्वं कुर्य्यात् ॥ २४ ॥ ततः प्राङ्मुखाग्रतो यत्र- राम इति प्रदक्षिणं कृत्वा प्रत्येत्य च यथाशक्ति दक्षिणाभिः समभ्यर्च्याभिरमन्तु भवन्त इत्युक्ते तैरभिरताः स्म इति देवाश्च पितरश्चेत्यभिजपेत् ॥ २५ ॥ अक्षय्योदकञ्च नामगोत्राभ्यां दत्त्वा विश्वेदेवाः प्रीयन्तामिति प्राङ्मुखेभ्यस्ततः प्राञ्जलिरिदमनाः सुमना याचेत ॥ २६ ॥

दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च ।
श्रद्धा च नो मा व्यगमद्बहु देयञ्च नोऽस्त्विति ॥ २७ ॥

तथास्त्विति ब्रूयुः ॥ २८ ॥

अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि ।

दातारश्च नः सन्तु मा च याचिष्म कञ्चन ॥ २९ ॥

इत्येताभ्यामाशिषः प्रतिगृह्य ॥ ३० ॥

वाजे वाजे इति ततो ब्राह्मणांश्च विसर्ज्जयेत् ।
पूजयित्वा यथान्यायमनुव्रज्याभिवाद्य च ॥ ३१ ॥

इति वैष्णवे धर्म्मशास्त्रे त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

---

## चतुःसप्ततितमोऽध्यायः ।

अष्टकासु दैवपूर्व्वं शाकमांसापूपैः श्राद्धं कृत्वा त्वन्वष्टकास्वष्टकावदग्नौ दैवपूर्व्वमेव हुत्वा मात्रे पितामह्यै प्रपितामह्यै च पूर्व्ववद्ब्राह्मणान् भोजयित्वा दक्षिणाभिश्चाभ्यर्च्यानुव्रज्य विसर्ज्जयेत् ॥ १ ॥ ततः कर्षूः कुर्य्यात् ॥ २ ॥ तन्मूले प्रागुदगग्न्युपसमाधानं कृत्वा पिण्डनिर्व्वपणम् ॥ ३ ॥ कर्षूत्रयमूले पुरुषाणां कर्षूत्रयमूले स्त्रीणाम् ॥ ४ ॥ पुरुषकर्षूत्रयं साम्नोदकेन पूरयेत् ॥ ५ ॥ स्त्रीकर्षूत्रयं सान्नेन पयसा ॥ ६ ॥ दध्ना मांसेन पयसा च प्रत्येकं कर्षूत्रयत् ॥ ७ ॥ पूरयित्वा जपेदेतद्वत्सौ भवतीभ्योऽस्तु चाक्षयम् ॥ ८ ॥

इति वैष्णवे धर्म्मशास्त्रे चतुःसप्ततितमोऽध्यायः ॥ ७४

---

## पञ्चसप्ततितमोऽध्यायः ।

पितरि जीवति यः श्राद्धं कुर्य्यात् स येषां पिता कुर्य्यात् तेषां कुर्य्यात् ॥ १ ॥ पितरि पितामहे च जीवति येषां पितामहः ॥ २ ॥ पितरि पितामहे प्रपितामहे च जीवति नैव कुर्य्यात् ॥ ३ ॥ यस्य पिता प्रेतः स्यात् स पित्रे पिण्डं निधाय प्रपितामहात् परं द्वाभ्यां दद्यात् ॥ ४ ॥ यस्य पिता पितामहश्च प्रेतौ स्यातां स ताभ्यां पिण्डौ दत्त्वा पितामहपितामहाय दद्यात् ॥ ५ ॥ यस्य पितामहः प्रेतः स्यात् स तस्मै पिण्डं निधाय प्रपितामहात् परं द्वाभ्यां दद्यात् ॥ ६ ॥ यस्य पिता प्रपितामहश्च प्रेतौ स्यातां स पित्रे पिण्डं निधाय पितामहात् परं द्वाभ्यां दद्यात् ॥ ७ ॥

मातामहानामप्येवं श्राद्धं कुर्य्याद्विचक्षणः ।
मन्त्रोहेन यथान्यायं शेषाणां मन्त्रवर्ज्जितम् ॥ ८ ॥

इति वैष्णवे धर्म्मशास्त्रे पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

---

## षट्सप्ततितमोऽध्यायः ।

अमावास्यास्तिस्रोऽष्टकास्तिस्रोऽन्वष्टका माघी प्रोष्ठपद्यूर्द्ध्वं कृष्णा त्रयोदशी व्रीहियवपाकौ चेति ॥ १ ॥

एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः ।
श्राद्धमेतेष्वकुर्व्वाणो नरकं प्रतिपद्यते ॥ २ ॥

इति वैष्णवे धर्म्मशास्त्रे षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

---

## सप्तसप्ततितमोऽध्यायः ।

आदित्यसंक्रमणम् ॥ १ ॥ विषुवद्वयम् ॥ २ ॥ विशेषेणायनद्वयम् ॥ ३ ॥ व्यतीपातः ॥ ४ ॥ जन्मर्क्षम् ॥ ५ ॥ अभ्युदयश्च ॥ ६ ॥

एतांस्तु श्राद्धकालान् वै काम्यानाह प्रजापतिः ।
श्राद्धमेतेषु यद्दत्तं तदानन्त्याय कल्पते ॥ ७ ॥

सन्ध्यारात्र्योर्न कर्त्तव्यं श्राद्धं खलु विचक्षणैः ।
तयोरपि च कर्त्तव्यं यदि स्याद्राहुदर्शनम् ॥ ८ ॥

राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम् ।
गुणवत् सर्व्वकामीयं पितॄणामुपतिष्ठते ॥ ९ ॥

इति वैष्णवे धर्म्मशास्त्रे सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

---

## अष्टसप्ततितमोऽध्यायः ।

सततमादित्येऽह्नि श्राद्धं कुर्व्वन्नारोग्यमाप्नोति ॥ १ ॥ सौभाग्यं चान्द्रे ॥ २ ॥ समरविजयं कौजे ॥ ३ ॥ सर्व्वान् कामान् बौधे ॥ ४ ॥ विद्यामभीष्टां जैवे ॥ ५ ॥ धनं शौक्रे ॥ ६ ॥ जीवितं शनैश्चरे ॥ ७ ॥ स्वर्गं कृत्तिकासु ॥ ८ ॥ अपत्यं रोहिणीषु ॥ ९ ॥ ब्रह्मवर्चस्यं सौम्ये ॥ १० ॥ कर्म्मसिद्धिं रौद्रे ॥ ११ ॥ भुवं पुनर्व्वसौ ॥ १२ ॥ पुष्टिं पुष्ये ॥ १३ ॥ श्रियं सार्पे ॥ १४ ॥ सर्व्वान् कामान् पैत्रे ॥ १५ ॥ सौभाग्यं भाग्ये ॥ १६ ॥ धनमार्य्यमणे ॥ १७ ॥

ज्ञातिश्रैष्ठ्यं हस्ते ॥ १८ ॥ रूपवतः सुतांश्चित्रायां ॥ १९ ॥ वाणिज्यसिद्धिं स्वातौ ॥ २० ॥ कनकं विशाखासु ॥ २१ ॥ मित्राणि मैत्रे ॥ २२ ॥ राज्यं शाक्रे ॥ २३ ॥ कृषिं मूले ॥ २४ ॥ समुद्रयानसिद्धिम् [illegible] ॥ २५ ॥ सर्व्वान् कामान् वैश्वदेवे ॥ २६ ॥ श्रै[illegible]भिजिति ॥ २७ ॥ सर्व्वान् कामान् श्रवणे ॥ २८ ॥ लवणं वासवे ॥ २९ ॥ आरोग्यं वारुणे ॥ ३० ॥ कुप्यद्रव्यमाजे ॥ ३१ ॥ गृहमाहिर्बुध्ने ॥ ३२ ॥ गाः पौष्णे ॥ ३३ ॥ तुरङ्गमाश्विने ॥ ३४ ॥ जीवितं याम्ये ॥ ३५ ॥ गृहं सुरूपाः स्त्रियः प्रतिपदि ॥ ३६ ॥ कन्यां वरदां द्वितीयायाम् ॥ ३७ ॥ सर्व्वान् कामांस्तृतीयायाम् ॥ ३८ ॥ पशूंश्चतुर्थ्याम् ॥ ३९ ॥ श्रियं सुरूपान् सुतान् पञ्चम्याम् ॥ ४० ॥ द्यूतविजयं षष्ठ्याम् ॥ ४१ ॥ कृषिं सप्तम्याम् ॥ ४२ ॥ वाणिज्यमष्टम्याम् ॥ ४३ ॥ पशून् नवम्याम् ॥ ४४ ॥ वाजिनो दशम्याम् ॥ ४५ ॥ ब्रह्मवर्च्चस्विनः पुत्रानेकादश्याम् ॥ ४६ ॥ आयुर्व्वसुराज्यश्रयान् कनकरजतं द्वादश्याम् ॥ ४७ ॥ सौभाग्यं त्रयोदश्याम् ॥ ४८ ॥ सर्व्वकामान् पञ्चदश्याम् ॥ ४९ ॥ शस्त्रहतानां श्राद्धकर्म्मणि चतुर्द्दशी प्रशस्ता ॥ ५० ॥ अपि पितृगीता गाथा भवन्ति ॥ ५१ ॥

अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः ।
प्रावृट्कालेऽसिते पक्षे त्रयोदश्यां समाहितः ॥ ५२ ॥
मधूत्कटेन यः श्राद्धं पायसेन समाचरेत् ।
कार्त्तिकं सकलं मासं प्राक्छाये कुञ्जरस्य च ॥ ५३ ॥

इति वैष्णवे धर्म्मशास्त्रे अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

---

## एकोनाशीतितमोऽध्यायः ।

अथ न नक्तं गृहीतेनोदकेन श्राद्धं कुर्य्यात् ॥ १ ॥ कुशाभावे कुशस्थाने काशान् दूर्व्वां वा दद्यात् ॥ २ ॥ वाससोऽर्थे कार्पासोत्थं सूत्रम् ॥ ३ ॥ दशां विसर्ज्जयेद्यद्यप्याहतवस्त्रजा स्यात् ॥ ४ ॥ उग्रगन्धीन्यगन्धीनि कण्टकिजातानि रक्तानि च पुष्पाणि ॥ ५ ॥ शुक्लानि सुगन्धीनि कण्टकिजातान्यपि जलजानि रक्तान्यपि दद्यात् ॥ ६ ॥ वसां मेदश्च दीपार्थे न दद्यात् ॥ ७ ॥ घृतं तैलं वा दद्यात् ॥ ८ ॥ जीवजं सर्व्वधूपार्थे न दद्यात् ॥ ९ ॥ मधुघृतसंयुक्तं गुग्गुलं दद्यात् ॥ १० ॥ चन्दनकुङ्कुमकर्पूरागुरुपद्मकान्यनुलेपनार्थे ॥ ११ ॥ न प्रत्यक्षलवणं दद्यात् ॥ १२ ॥ हस्तेन च घृतव्यञ्जनादि ॥ १३ ॥ तैजसानि पात्राणि दद्यात् ॥ १४ ॥ विशेषतो राजतानि ॥ १५ ॥ खड्गकुतपकृष्णाजिनतिलसिद्धार्थकाक्षतानि च पवित्राणि रक्षोघ्नानि च निदध्यात् ॥ १६ ॥ पिप्पलीमुकुन्दकभूस्तृणशिग्रुसर्षपसुरसासर्ज्जकसुवर्च्चल-कूष्माण्डालाबुवार्त्ताकपालक्योपोदकीतण्डुलीयककुसुम्भपिण्डालुकमहिषीक्षीराणि वर्ज्जयेत् ॥ १७ ॥ राजमाषमसूरपर्य्युषितकृतलवणानि च ॥ १८ ॥ कोपं परिहरेत् ॥ १९ ॥ नाश्रु पातयेत् ॥ २० ॥ न त्वरां कुर्य्यात् ॥ २१ ॥ घृतादिदाने तैजसानि पात्राणि खड्गपात्राणि फल्गुपात्राणि च प्रशस्तानि ॥ २२ ॥ अत्र च श्लोको भवति ॥ २३ ॥

सौवर्णराजताभ्याञ्च खड्गेनौडुम्बरेण च ।
दत्तमक्षयतां याति फल्गुपात्रेण चाप्यथ ॥ २४ ॥

इति वैष्णवे धर्म्मशास्त्रे एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

---

## अशीतितमोऽध्यायः ।

तिलैर्व्रीहियवैर्म्माषैरद्भिर्मूलफलैः शाकैः श्यामाकैः प्रियङ्गुभिर्नीवारैर्मुद्गैर्गोधूमैश्च मासं प्रीयन्ते ॥ १ ॥ द्वौ मासौ मत्स्यमांसेन ॥ २ ॥ त्रीन् हारिणेन ॥ ३ ॥ चतुरश्चौरभ्रेण ॥ ४ ॥ पञ्च शाकुनेन ॥ ५ ॥ षट् छागेन ॥ ६ ॥ सप्त रौरवेण ॥ ७ ॥ अष्टौ पार्षतेन ॥ ८ ॥ नव गवयेन ॥ ९ ॥ दश माहिषेण ॥ १० ॥ एकादश कौर्म्मेण ॥ ११ ॥ संवत्सरं गव्येन पयसा तद्विकारैर्वा ॥ १२ ॥ अत्र पितृगीता गाथा भवन्ति ॥ १३ ॥

ससूकं मत्स्यमत्स्यं मांसं वाध्रीणसस्य च ।
यावन्त्यग्रा ये खड्गास्तांस्तु भक्ष्यामहे सदा ॥ १४ ॥

इति वैष्णवे धर्म्मशास्त्रेऽशीतितमोऽध्यायः ॥ ८० ॥

---

## एकाशीतितमोऽध्यायः ।

नाश्ममासनमारोपयेत् ॥ १ ॥ न पदा स्पृशेत् ॥ २ ॥ नावक्षुतं कुर्य्यात् ॥ ३ ॥ तिलैः सर्षपैर्व्वा तुधानान् विसर्ज्जयेत् ॥ ४ ॥ संवृते न श्राद्धं कुर्य्यात् ॥ ५ ॥ न रजस्वलां पश्येत् ॥ ६ ॥ न श्वानम् ॥ ७ ॥ विड्वराहम् ॥ ८ ॥ न ग्राम्यकुक्कुटम् ॥ ९ ॥ प्रयत्नाच्छ्राद्धमजस्य दर्शयेत् ॥ १० ॥ भोयुर्ब्राह्मणाश्च वाग्यताः ॥ ११ ॥ न वेष्टितशिरसः ॥ १२ ॥ न सोपानत्काः ॥ १३ ॥ न ठोपहितपादाः ॥ १४ ॥ न हीनाङ्गाधिकाङ्गाः शुद्धं पश्येयुः ॥ १५ ॥ न शूद्राः ॥ १६ ॥ न पतिताः ॥ १७ ॥ तत्कालं ब्राह्मणं ब्राह्मणानुमतेन भिक्षुकं भोजयेत् ॥ १८ ॥ हविर्गुणान् न ब्रूयुः ता एव ॥ १९ ॥

यदुष्णं भवत्यन्नं यावदश्नन्ति वाग्यताः ।
तावदश्नन्ति पितरो यावन्नोक्ता हविर्गुणाः ॥ २० ॥
सार्व्ववर्णिकमन्नाद्यं सन्नीयाप्लाव्य वारिणा ।
समुत्सृजेद् भुक्तवतामग्रतो विकिरन् भुवि ॥ २१ ॥
असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम् ।
उच्छिष्टं भागधेयं स्याद्दर्भेषु विकिरश्च यः ॥ २२ ॥
उच्छेषणं भूमिगतमजिह्मस्याशठस्य वा ।
दासवर्गस्य तत्पित्र्ये भागधेयं प्रचक्षते ॥ २३ ॥

इति वैष्णवे धर्म्मशास्त्रे एकाशीतितमोऽध्यायः ॥ ८१ ॥

---

## द्व्यशीतितमोऽध्यायः ।

दैवे कर्म्मणि ब्राह्मणं न परीक्षेत ॥ १ ॥ प्रयत्नात् पित्र्ये परीक्षेत ॥ २ ॥ हीनाधिकाङ्गान् विवर्जयेत् ॥ ३ ॥ विकर्म्मस्थांश्च ॥ ४ ॥ वैडालव्रतिकान् ॥ ५ ॥ वृथालिङ्गिनः ॥ ६ ॥ नक्षत्रजीविनः ॥ ७ ॥ देवलकांश्च ॥ ८ ॥ चिकित्सकान् ॥ ९ ॥ अनूढापुत्रान् ॥ १० ॥ तत्पुत्रान् ॥ ११ ॥ बहुयाजिनः ॥ १२ ॥ ग्रामयाजिनः ॥ १३ ॥ शूद्रयाजिनः ॥ १४ ॥ अयाज्ययाजिनः ॥ १५ ॥ व्रात्यान् ॥ १६ ॥ तद्[illegible] ॥ १७ ॥ पर्व्वकारान् ॥ १८ ॥ सूचकान् ॥ १९ ॥ भृतकाध्यापकान् ॥ २० ॥ भृतकाध्यापितान् ॥ २१ ॥ शूद्रान्नपुष्टान् ॥ २२ ॥ पतितसंसर्गान् ॥ २३ ॥ अनधीयानान् ॥ २४ ॥ सन्ध्योपासनभ्रष्टान् ॥ २५ ॥ राजसेवकान् ॥ २६ ॥ नग्नान् ॥ २७ ॥ पित्रा विवदमानान् ॥ २८ ॥ पितृमातृगुर्व्वग्निस्वाध्यायत्यागिनश्चेति ॥ २९ ॥

ब्राह्मणापसदा ह्येते कथिताः पङ्क्तिदूषकाः ।
एतान् विवर्ज्जयेद्यत्नाच्छ्राद्धकर्म्मणि पण्डितः ॥ ३० ॥

इति वैष्णवे धर्म्मशास्त्रे द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

---

## त्र्यशीतितमोऽध्यायः ।

अथ पङ्क्तिपावनाः ॥ १ ॥ त्रिणाचिकेतः ॥ २ ॥ पञ्चाग्निः ॥ ३ ॥ ज्येष्ठसामगः ॥ ४ ॥ वेदपारगः ॥ ५ ॥ वेदाङ्गस्याप्येकस्य पारगः ॥ ६ ॥ पुराणेतिहासव्याकरणपारगः ॥ ७ ॥ धर्म्मशास्त्रस्याप्येकस्य पारगः ॥ ८ ॥ तीर्थपूतः ॥ ९ ॥ यज्ञपूतः ॥ १० ॥ तपःपूतः ॥ ११ ॥ सत्यपूतः ॥ १२ ॥ मन्त्रपूतः ॥ १३ ॥ गायत्रीजपनिरतः ॥ १४ ॥ ब्रह्मदेयानुसन्तानः ॥ १५ ॥ त्रिसुपर्णः ॥ १६ ॥ जामाता ॥ १७ ॥ दौहित्रश्चेति पात्रम् ॥ १८ ॥ विशेषेण च योगिनः ॥ १९ ॥ अत्र पितृगीता गाथा भवन्ति ॥ २० ॥

अपि स स्यात् कुलेऽस्माकं भोजयेद्यस्तु योगिनम् ।
विप्रं श्राद्धे प्रयत्नेन यत्र तृप्यामहे वयम् ॥ २१ ॥

इति वैष्णवे धर्म्मशास्त्रे त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

---

## चतुरशीतितमोऽध्यायः ।

न म्लेच्छविषये श्राद्धं कुर्य्यात् ॥ १ ॥ न गच्छेन्म्लेच्छविषयम् ॥ २ ॥ परनिपानेष्वपः पीत्वा तत्सामान्यमुपगच्छतीति ॥ ३ ॥

चातुर्वर्ण्यव्यवस्थानं यस्मिन् देशे न विद्यते ।
स म्लेच्छदेशो विज्ञेय आर्य्यावर्त्तस्ततः परः ॥ ४ ॥
इति वैष्णवे धर्म्मशास्त्रे चतुरशीतितमोऽध्यायः ॥८४॥

---

## [illegible]शीतितमोऽध्यायः ।

अथ पुष्करेष्वक्षय्यश्राद्धम् ॥१॥ जप्यहोमतपांसि च ॥ २ ॥ पुष्करे स्नानमात्रतः सर्व्वपापेभ्यः पूतो भवति ॥ ३ ॥ एवमेव गयाशीर्षे ॥४॥ अक्षयवटे ॥५॥ अमरकण्टकपर्व्वते ॥ ६ ॥ वराहपर्व्वते ॥ ७ ॥ यत्र क्वचन नर्म्मदातीरे ॥ ८ ॥ यमुनातीरे ॥ ९ ॥ गङ्गायां विशेषतः १० ॥ कुशावर्त्ते ॥ ११ ॥ विन्दुके ॥ १२ ॥ नीलपर्व्वते ॥ १३ ॥ कनखले ॥ १४ ॥ कुब्जाम्रे ॥१५॥ भृगुतुङ्गे ॥ १६ ॥ केदारे ॥ १७ ॥ महालये ॥ १८ ॥ नड़न्तिकायाम् ॥ १९ ॥ सुगन्धायाम् ॥२०॥ शाकम्भर्य्याम् ॥२१॥ फल्गुतीर्थे ॥२२॥ महागङ्गायाम् ॥२३॥ त्रिहलिकाग्रामे ॥ २४ ॥ कुमारधारायाम् ॥ २५ ॥ प्रभासे ॥ २६ ॥ यत्र क्वचन सरस्वत्यां विशेषतः ॥२७॥

गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे ।
सततं नैमिषारण्ये वाराणस्यां विशेषतः ॥ २८ ॥

अगस्त्याश्रमे ॥२९॥ कण्वाश्रमे ॥३०॥ कौशिक्याम् ॥ ३१ ॥ सरयूतीरे ॥ ३२ ॥ शोणस्य ज्योतिषायाश्च सङ्गमे ॥ ३३ ॥ श्रीपर्व्वते ॥ ३४ ॥ कालोदके ॥ ३५ ॥ उत्तरमानसे ॥३६॥ वड़वायाम् ॥३७॥ मतङ्गवाप्याम् ॥ ३८ ॥ सप्तार्षे ॥ ३९ ॥ विष्णुपदे ॥ ४० ॥ स्वर्गमार्गपदे ॥ ४१ ॥ गोदावर्य्याम् ॥ ४२ ॥ गोमत्याम् ॥ ४३ ॥ वेत्रवत्याम् ॥४४॥ विपाशायाम् ॥ ४५ ॥ वितस्तायाम् ॥ ४६ ॥ शतद्रुतीरे ॥ ४७ ॥ चन्द्रभागायाम् ॥४८॥ इरावत्याम् ॥ ४९ ॥ सिन्धोस्तीरे ॥ ५० ॥ दक्षिणे पञ्चनदे ॥ ५१ ॥ औसजे ॥ ५२ ॥ एवमादिष्वथान्येषु तीर्थेषु ॥ ५३ ॥ सरिद्वरासु ॥ ५४ ॥ सर्व्वेष्वपि स्वभावेषु ॥५५॥ पुलिनेषु ॥ ५६ ॥ प्रस्रवणेषु ॥ ५७ ॥ पर्व्वते ॥ ५८ ॥ निकुञ्जेषु ॥ ५९ ॥ वनेषु ॥ ६० ॥ उपवनेषु ॥ ६१ ॥ गोमयेनोपलिप्तेषु ॥ ६२ ॥ मनोज्ञेषु ॥ ६३ ॥ अत्र च पितृगीता गाथा भवन्ति ॥ ६४ ॥

कुलेऽस्माकं स जन्तुः स्याद्यो नो दद्याज्जलाञ्जलीन्
नदीषु बहुतोयासु शीतलासु विशेषतः ॥ ६५
अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः ।
गयाशीर्षे वटे श्राद्धं यो नः कुर्य्यात् समाहितः ॥ ६
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥ ६७
इति वैष्णवे धर्म्मशास्त्रे पञ्चाशीतितमोऽध्यायः ॥८-

---

## षड़शीतितमोऽध्यायः ।

अथ वृषोत्सर्गः ॥ १ ॥ कार्त्तिक्यामाश्वयुज्यां वा ॥ २ ॥ तत्रादावेव वृषभं परीक्षेत ॥ ३ ॥ जीववत्साया पयस्विन्याः पुत्रम् ॥ ४ ॥ सर्व्वलक्षणोपेतम् ॥ ५ ॥ नीलम् ॥ ६ ॥ लोहितं वा मुखपुच्छपादशृङ्गशुक्लम् ॥ ७ ॥ यूथस्याच्छादकम् ॥ ८ ॥ ततो गवां मध्ये सुसमिद्धमग्निं परिस्तीर्य्य पौष्णं चरुं पयसा श्रपयित्वा पूषा गा अन्वेतु न इह रतिरिति च हुत्वा वृषमयस्कारस्त्वङ्कयेत् ॥९॥ एकस्मिन् पार्श्वे चक्रेणापरस्मिन् पार्श्वे शूलेन ॥ १० ॥ अङ्कितञ्च हिरण्यवर्णा इति चतसृभिः शन्नोदेवीरिति च स्नापयेत् ॥ ११ ॥ स्नातमलङ्कृतं स्नातमालङ्कृताभिश्चतसृभिर्वत्सतरीभिः सामानीय रुद्रान् पुरुषसूक्तं कूश्माण्डीश्च जपेत् ॥ १२ ॥ पिता वत्समिति वृषभस्य दक्षिणे कर्णे पठेत् ॥ १३ ॥ इमञ्च ॥ १४ ॥

वृषो हि भगवान् धर्म्मश्चतुष्पादः प्रकीर्त्तितः ।
वृणोमि तमहं भक्त्या स मे रक्षतु सर्व्वतः ॥ १५ ॥

एतं युवानं पतिं वो ददामि
तेन क्रीड़न्तीश्चरथ प्रियेण ।
मा हास्महि प्रजया मा तनूभि-
र्मा रधाम द्विषते सोम राजन् ॥ १६ ॥

वृषं वत्सतरीयुक्तमैशान्यां कारयेद्दिशि ।
होतुर्व्वस्त्रयुगं दद्यात् सुवर्णं कांस्यमेव च ॥ १७ ॥
अयस्कारस्य दातव्यं वेतनं मनसेप्सितम् ।
भोजनं बहुसर्पिष्कं आ[illegible] भोजयेत् ॥ १८ ॥

उत्सृष्टो वृषभो यस्मिन् पिबत्यथ जलाशये।
शाखिशालाशयं तत् सकलं पितॄंस्तस्योपतिष्ठति ॥ १९ ॥

समुत्क्षिप्तो लिखते भूमिं यत्र क्वचन दर्पितः।
वाजे पितॄणामन्नपानं तत् प्रभूतमुपतिष्ठति ॥ २०॥

इति वैष्णवे धर्मशास्त्रे षडशीतितमोऽध्यायः ॥८६॥

---

## सप्ताशीतितमोऽध्यायः।

अथ वैशाख्यां पौर्णमास्यां कृष्णमृगाजिनं सुवर्णशृङ्गं रौप्यखुरं मौक्तिकलाङ्गूलभूषितं कृत्वा आविके वस्त्रे च प्रसारयेत् ॥ १ ॥ ततस्तिलैः प्रच्छादयेत् ॥ २ ॥ सुवर्णनाभिञ्च कुर्यात् ॥ ३ ॥ अहतेन वासोयुगेन प्रच्छादयेत् ॥ ४ ॥ सर्वगन्धरत्नैश्चालङ्कृतं कुर्यात् ॥ ५ ॥ चतसृषु दिक्षु चत्वारि तैजसपात्राणि क्षीरदधिमधुघृतपूर्णानि निधाय आहिताग्नये ब्राह्मणायालङ्कृताय वासोयुगेन प्रच्छादिताय दद्यात् ॥ ६ ॥ अत्र च गाथा भवन्ति ॥ ७ ॥

यस्तु कृष्णाजिनं दद्यात् सखुरं शृङ्गसंयुतम्।
तिलैः प्रच्छाद्य वासोभिः सर्वरत्नैरलङ्कृतम् ॥ ८ ॥

ससमुद्रगुहा तेन सशैलवनकानना।
चतुरन्ता भवेद्दत्ता पृथिवी नात्र संशयः ॥ ९ ॥

कृष्णाजिने तिलान् कृत्वा हिरण्यं मधुसर्पिषी।
ददाति यस्तु विप्राय सर्वं तरति दुष्कृतम् ॥ १० ॥

इति वैष्णवे धर्मशास्त्रे सप्ताशीतितमोऽध्यायः ॥८७॥

---

## अष्टाशीतितमोऽध्यायः।

अथ प्रसूयमाना गौः पृथिवी भवति ॥ १ ॥ तामलङ्कृतां ब्राह्मणाय दत्त्वा पृथिवीदानफलमाप्नोति ॥ २ ॥ अत्र च गाथा भवति ॥ ३ ॥

यावन्ति वत्सारोमतुल्यानि युगान्युभयतोमुखीम्।
दत्त्वा स्वर्गमवाप्नोति श्रद्दधानः समाहितः ॥ ४ ॥

इति वैष्णवे धर्मशास्त्रे ऽष्टाशीतितमोऽध्यायः ॥८८॥

---

## एकोननवतितमोऽध्यायः।

मासः कार्त्तिकोऽग्निदैवत्यः ॥ १ ॥ अग्निश्च सर्वदेवानां मुखम् ॥ २ ॥ तस्मात् कार्त्तिकं मासं बहिःस्नायी गायत्रीजपनिरतः सकृदेव हविष्याशी संवत्सरकृतात् पापात् पूतो भवति [illegible]

कार्त्तिकं सकलं मासं नित्यस्नायी जितेन्द्रियः।
जपन् हविष्यभुग्दान्तः सर्वपापैः प्रमुच्यते ॥ ४ ॥

इति वैष्णवे धर्मशास्त्रे एकोननवतितमोऽध्यायः ॥८९॥

---

## नवतितमोऽध्यायः।

मार्गशीर्षशुक्लपञ्चदश्यां मृगशिरःसंयुक्तायां चूर्णितलवणस्य सुवर्णनाभं प्रस्थमेकं चन्द्रोदये ब्राह्मणाय प्रदापयेत् ॥ १ ॥ अनेन कर्मणा रूपसौभाग्यवानभिजायते ॥ २ ॥ पौषी चेत् पुष्ययुक्ता स्यात् तस्यां गौरसर्षपकल्कोद्वर्त्तितशरीरो गव्यघृतपूर्णकुम्भेनाभिषिक्तः सर्वौषधिभिः सर्वगन्धैः सर्ववीजैश्च स्नातो घृतेन भगवन्तं वासुदेवं स्नापयित्वा गन्धपुष्पधूपदीपनैवेद्यादिभिश्चाभ्यर्च्य वैष्णवैः शाक्रैर्वार्हस्पत्यैश्च मन्त्रैः पावके हुत्वा ससुवर्णेन घृतेन ब्राह्मणान् स्वस्ति वाचयेत् ॥ ३ ॥ वासोयुगं कर्त्रे दद्यात् ॥ ४ ॥ अनेन कर्मणा पुष्यते ॥ ५ ॥ माघी मघायुता चेत् तस्यां तिलैः श्राद्धं कृत्वा पूतो भवति ॥ ६ ॥ फाल्गुनी फाल्गुनीयुता चेत् स्यात् तस्यां ब्राह्मणाय सुसंस्कृतं स्वास्तीर्णं शयनं निवेद्य भार्य्यां मनोज्ञां रूपवतीं द्रविणवतीञ्चाप्नोति ॥ ७ ॥ नार्य्यपि भर्त्तारम् ॥ ८ ॥ चैत्री चित्रायुता चेत् स्यात् तस्यां चित्रवस्त्रप्रदानेन सौभाग्यमाप्नोति ॥ ९ ॥ वैशाखी विशाखायुता चेत् तस्यां ब्राह्मणसप्तकं क्षौद्रयुक्तैस्तिलैः सन्तर्प्य धर्मराजानं प्रीणयित्वा पापेभ्यः पूतो भवति ॥ १० ॥ ज्यैष्ठी ज्येष्ठायुता चेत् तस्यां छत्रोपानत्प्रदानेन गवाधिपत्यं प्राप्नोति ॥ ११ ॥ आषाढ्यामाषाढायुक्तायामन्नपानदानेन तदेवाक्षय्यमाप्नोति ॥ १२ ॥ श्रावण्यां

श्रवणयुक्तायां जलधेनुं सान्नां वासोयुगाच्छादितां दत्त्वा स्वर्गमाप्नोति ॥ १३ ॥ प्रौष्ठपदायुक्तायां गोदानेन सर्व्वपापविनिर्म्मुक्तो भवति ॥ १४ ॥ आश्वयुज्यामश्विनीगते चन्द्रमसि घृतपूर्णं भाजनं सुवर्णयुतं विप्राय [illegible]दीप्ताग्निर्भवति ॥ १५ ॥ कार्त्तिकी कृत्तिकायुता चेत् तस्यां सितमुक्षाणमन्यवर्णं वा शशाङ्कोदये सर्व्वशस्यरत्नगन्धोपेतं दीपमध्ये ब्राह्मणाय दत्त्वा कान्तारभयं न पश्यति ॥ १६ ॥ वैशाख शुक्लतृतीयायामुपोषितोऽक्षतैर्व्वासुदेवमभ्यर्च्च्य तानेव हुत्वा दत्त्वा च सर्व्वपापेभ्यः पूतो भवति ॥ १७ ॥ यच्च तस्मिन्नहनि प्रयच्छति तदक्षय्यमाप्नोति ॥ १८ ॥ पौष्यां समतीतायां कृष्णपक्षद्वादश्यां सोपवासस्तिलैः स्नातस्तिलोदकं दत्त्वा तिलैर्व्वासुदेवमभ्यर्च्च्य तानेव हुत्वा भुक्त्वा च पापेभ्यः पूतो भवति ॥ १९ ॥ माघ्यां समतीतायां कृष्णद्वादश्यां सोपवासः श्रवणं प्राप्य वासुदेवाग्रतो महावर्त्तिद्वयेन दीपद्वयं दद्यात् ॥ २० ॥ दक्षिणपार्श्वे महारजनरक्तेन समग्रेण वाससा घृततुलामष्टाधिकां दत्त्वा ॥ २१ ॥ वामपार्श्वे तिलतैलतुलां साष्टां दत्त्वा श्वेतेन समग्रेण वाससा ॥ २२ ॥ एतत् कृत्वा कृतकृत्यो यस्मिन् राष्ट्रेऽभिजायते यस्मिन् देशे यस्मिन् कुले स तत्रोज्ज्वलो भवति ॥ २३ ॥ आश्विनं सकलं मासं ब्राह्मणेभ्यः प्रत्यहं घृतं प्रदद्यादश्विनौ प्रीणयित्वा रूपभाग्भवति ॥ २४ ॥ तस्मिन्नेव मासे प्रत्यहं गोरसैर्ब्राह्मणान् भोजयित्वा राज्यभाग् भवति ॥२५॥ प्रतिमासं रेवतीयुते चन्द्रमसि मधुघृतयुतं रेवतीप्रीत्यै परमान्नं ब्राह्मणान् भोजयित्वा रेवतीं प्रीणयित्वा रूपभाग् भवति ॥ २६ ॥ माघे मासेऽग्निं प्रत्यहं तिलैर्हुत्वा सघृतं कुल्माषं ब्राह्मणान् भोजयित्वा दीप्ताग्निर्भवति ॥ २७ ॥ सर्व्वां चतुर्द्दशीं नदीजले स्नात्वा धर्म्मराजानं पूजयित्वा सर्व्वपापेभ्यः पूतो भवति ॥ २८ ॥

यदीच्छेद्विपुलान् भोगान् चन्द्रसूर्य्यग्रहोपगान्।
प्रातःस्नायी भवेन्नित्यं द्वौ मासौ माघफाल्गुनौ ॥२९॥

## एकनवतितमोऽध्यायः।

अथ कूपकर्त्तुस्तत्प्रवृत्ते पानीये दुष्कृतस्यार्द्धं विनश्यति ॥ १ ॥ तडागकृन्नित्यतृप्तो वारुणं लोकमश्नुते ॥ २ ॥ जलप्रदः सदा तृप्तो भवति ॥ ३ ॥ वृक्षारोपयितुर्वृक्षाः परलोके पुत्रा भवन्ति ॥ ४ ॥ वृक्षप्रदो वृक्षप्रसूनैर्द्देवान् प्रीणयन्ति ॥ ५ ॥ फलैश्चातिथीन् ॥ ६ ॥ छायया चाभ्यागतान् ॥ ७ ॥ देवे वर्षत्युदकेन पितॄन् ॥ ८ ॥ सेतुकृत् स्वर्गमाप्नोति ॥ ९ ॥ देवायतनकारयिता देवायतनं करोति तस्यैव लोकमाप्नोति ॥ १० ॥ सुधासिक्तं कृत्वा यशसा विराजते ॥ ११ ॥ विचित्रं कृत्वा गन्धर्व्वलोकमाप्नोति ॥ १२ ॥ पुष्पप्रदानेन श्रीमान् भवति ॥ १३ ॥ अनुलेपनप्रदानेन कीर्त्तिमान् भवति ॥ १४ ॥ दीपप्रदानेन चक्षुष्मान् सर्व्वत्रोज्ज्वलश्च ॥ १५ ॥ अन्नप्रदानेन बलवान् ॥ १६ ॥ धूपप्रदानेनोर्द्ध्वं गच्छति। देवनिर्म्माल्यापनयनाद्गोप्रदानफलमाप्नोति ॥ १७ ॥ देवायतनमार्ज्जनात् तदुपलेपनाद्ब्राह्मणोच्छिष्टमार्ज्जनात् पादादिशौचादकल्यपरिचरणाच्च ॥ १८ ॥

कूपारामतडागेषु देवतायतनेषु च।
पुनःसंस्कारकर्त्ता च लभते मौलिकं फलम् ॥ १९ ॥

इति वैष्णवे धर्म्मशास्त्रे एकनवतितमोऽध्यायः ॥९१॥

---

## द्विनवतितमोऽध्यायः।

सर्व्वदानाधिकमभयप्रदानम् ॥ १ ॥ तत्प्रदानेनाभीप्सितं लोकमाप्नोति ॥ २ ॥ भूमिप्रदानेन च ॥ ३ ॥ गोचर्म्ममात्रामपि भुवं प्रदाय सर्व्वपापेभ्यः पूतो भवति ॥ ४ ॥ गोप्रदानेन स्वर्गलोकमाप्नोति ॥ ५ ॥ दशधेनुप्रदो गोलोकान् ॥ ६ ॥ शतधेनुप्रदो ब्रह्मलोकान् ॥ ७ ॥ सुवर्णशृङ्गीं रौप्यखुरीं मुक्तालाङ्गूलां कांस्योपदोहां वस्त्रोत्तरीयां दत्त्वा धेनुरोमसङ्ख्यानि वर्षाणि स्वर्गलोकमाप्नोति ॥ ८ ॥ विशेषतः कपिलाम् ॥ ९ ॥ दान्तं धुरन्धरं दत्त्वा दशधेनुप्रदो

भवति ॥ १० ॥ अम्बुदः सूर्य्यसालोक्यमाप्नोति ॥ ११ ॥ वासोदश्चन्द्रसालोक्यम् ॥ १२ ॥ सुवर्णदानेनाग्निसालोक्यम् ॥ १३ ॥ रूप्यप्रदानेन रूपम् ॥ १४ ॥ तैजसानां पात्रप्रदानेन पात्रं भवेत् सर्व्वकामानाम् ॥ १५ ॥ घृतमधुतैलप्रदानेनारोग्यम् ॥ १६ ॥ औषधप्रदानेन च ॥ १७ ॥ लवणप्रदानेन च लावण्यम् ॥ १८ ॥ धान्यप्रदानेन तृप्तिम् ॥ १९ ॥ शस्यप्रदानेन च ॥ २० ॥ अन्नदः सर्व्वम् ॥ २१ ॥ धान्यप्रदानेन सौभाग्यम् ॥ २२ ॥ अकीर्त्तितानामप्येषां दानात् स्वर्गमवाप्नुयादिति । तिलप्रदः प्रजामिष्टाम् ॥ २३ ॥ इन्धनप्रदानेन दीप्ताग्निर्भवति ॥ २४ ॥ संग्रामे च जयमाप्नोति ॥ २५ ॥ आसनप्रदानेन स्थानम् ॥ २६ ॥ शय्याप्रदानेन भार्य्याम् ॥ २७ ॥ उपानत्प्रदानेनाश्वतरीयुक्तं रथम् ॥ २८ ॥ छत्रप्रदानेन स्वर्गम् ॥ २९ ॥ तालवृन्तचामरप्रदानेनाध्वसुखित्वम् ॥ ३० ॥ वास्तुप्रदानेन नगराधिपत्यम् ॥ ३१ ॥

यद्यदिष्टतमं लोके यच्चास्ति दयितं गृहे ।
तत्तद्गुणवते देयं तदेव क्षयमिच्छता ॥ ३२ ॥

इति वैष्णवे धर्म्मशास्त्रे द्विनवतितमोऽध्यायः ॥ ९२ ॥

---

## त्रिनवतितमोऽध्यायः ।

अब्राह्मणे दत्तं तत्सममेव पारलौकिकम् ॥ १ ॥ द्विगुणं ब्राह्मणब्रुवे ॥ २ ॥ सहस्रगुणं प्राधीते ॥ ३ ॥ अनन्तं वेदपारगे ॥ ४ ॥ परीक्षितस्तस्मिन् एव पात्रम् । स्वसा दुहिता जामातरश्च पात्रम् ॥ ६ ॥

न वार्य्यपि प्रयच्छेत बैडालव्रतिके द्विजे ।
न बकव्रतिके पापे नावेदविदि धर्म्मवित् ॥ ७ ॥
धर्म्मध्वजी सदा लुब्धश्छाद्मिको लोकदाम्भिकः ।
बैडालव्रतिको ज्ञेयो हिंस्रः सर्व्वाभिसन्धकः ॥ ८ ॥
अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः ।
शठो मिथ्याविनीतश्च बकव्रतपरो द्विजः ॥ ९ ॥
ये बकव्रतिनो लोके ये च मार्ज्जारलिङ्गिनः ।
ते पतन्त्यन्धतामिस्रे तेन पापेन कर्म्मणा ॥ १० ॥
न धर्म्मस्यापदेशेन पापं कृत्वा व्रतं चरेत् ।
व्रतेन पापं प्रच्छाद्य कुर्व्वन् स्त्रीशूद्रदम्भनम् ॥ ११ ॥
प्रेत्येह चेदृशो विप्रो गर्ह्यते ब्रह्मवादिभिः ।
छद्मनाचरितं यच्च तद्व्रतं रक्षांसि गच्छति ॥ १२ ॥
अलिङ्गी लिङ्गिवेषेण यो वृत्तिमुपजीवति ।
स लिङ्गिनां हरत्येनस्तिर्य्यग्योनौ प्रजायते ॥ १३ ॥
न दानं यशसे दद्यान्न भयान्नोपकारिणे ।
न नृत्यगीतशीलिभ्यो धर्म्मार्थमिति निश्चितम् ॥ १४ ॥

इति वैष्णवे धर्म्मशास्त्रे त्रिनवतितमोऽध्यायः ॥ ९३ ॥

---

## चतुर्नवतितमोऽध्यायः ।

गृही वलीपलितदर्शने वनाश्रयो भवेत् ॥ १ ॥ अपत्यस्य चापत्यदर्शनेन वा ॥ २ ॥ पुत्रेषु भार्य्यां निक्षिप्य तयानुगम्यमानो वा ॥ ३ ॥ तत्राप्यग्नीनुपचरेत् ॥ ४ ॥ अफालकृष्टेन पञ्चयज्ञान् न हापयेत् ॥ ५ ॥ स्वाध्यायञ्च न जह्यात् ॥ ६ ॥ ब्रह्मचर्य्यं पालयेत् ॥ ७ ॥ चर्म्मचीरवासाः स्यात् ॥ ८ ॥ जटाश्मश्रुलोमनखांश्च बिभृयात् ॥ ९ ॥ त्रिषवणस्नायी स्यात् ॥ १० ॥ कपोतवृत्तिर्मासनिचयः संवत्सरनिचयो वा ॥ ११ ॥ संवत्सरनिचयी पूर्व्वनिचितमाश्वयुज्यां जह्यात् ॥ १२ ॥

ग्रामादाहृत्य वाश्नीयादष्टौ ग्रासान् वने वसन् ।
पुटेनैव पलाशेन पाणिना शकलेन वा ॥ १३ ॥

इति वैष्णवे धर्म्मशास्त्रे चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

---

## पञ्चनवतितमोऽध्यायः ।

वानप्रस्थस्तपसा शरीरं शोषयेत् ॥ १ ॥ ग्रीष्मे पञ्चतपाः स्यात् ॥ २ ॥ आकाशशायी प्रावृषि ॥ ३ ॥ आर्द्रवासा हेमन्ते ॥ ४ ॥ नक्ताशी स्यात् ॥ ५ ॥ एकान्तरद्व्यन्तरत्र्यन्तराशी वा स्यात् ॥ ६ ॥ पुष्पाशी ॥ ७ ॥ फलाशी ॥ ८ ॥ शाकाशी ॥ ९ ॥ पर्णाशी ॥

१० ॥ मूलाशी ॥ ११ ॥ यवान्नं पक्षान्तयोर्वा सकृदश्नीयात् ॥ १२ ॥ चान्द्रायणैर्वा वर्त्तेत ॥ १३ ॥ अश्मकुट्टः ॥ १४ ॥ दन्तोलूखलिको वा ॥ १५ ॥

तपोमूलमिदं सर्व्वं दैवमानुषकं जगत् ।
तपोमध्यं तपोऽन्तञ्च तपसा च तथा धृतम् ॥ १६ ॥
यद्दुस्तरं यद्दुरापं यद्दूरं यच्च दुष्करम् ।
सर्व्वं तत्तपसा साध्यं तपो हि दुरतिक्रमम् ॥ १७ ॥

इति वैष्णवे धर्म्मशास्त्रे पञ्चनवतितमोऽध्यायः ॥९५॥

---

## षण्णवतितमोऽध्यायः ।

अथ त्रिष्वाश्रमेषु पक्वकषायः प्राजापत्यामिष्टिं कृत्वा सर्व्वं वेदं दक्षिणां दत्त्वा प्रव्रज्याश्रमी स्यात् ॥ आत्मन्यग्नीनारोप्य भिक्षार्थं ग्राममियात् ॥ २ ॥ सप्तागारिकं भैक्ष्यमादद्यात् ॥ ३ ॥ अलाभे न व्यथेत ॥ ४ ॥ न भिक्षुकं भिक्षेत ॥ ५ ॥ भुक्तवति जनेऽतीते पात्रसम्पाते भैक्ष्यमादद्यात् ॥ ६ ॥ मृन्मये दारुपात्रेऽलाबुपात्रे वा ॥ ७ ॥ तेषाञ्च तस्याद्भिः शुद्धिः स्यात् ॥ ८ ॥ अभिपूजितलाभादुद्विजेत ॥ ९ ॥ शून्यागारनिकेतनः स्यात् ॥ १० ॥ वृक्षमूलनिकेतनो वा ॥ ११ ॥ न ग्रामे द्वितीयां रात्रिमावसेत् ॥ १२ ॥ कौपीनाच्छादनमात्रमेव वसनमादद्यात् ॥ १३ ॥ दृष्टिपूतं न्यसेत् पादम् ॥ १४ ॥ वस्त्रपूतं जलमादद्यात् ॥ १५ ॥ सत्यपूतं वदेत् ॥ १६ ॥ मनःपूतं समाचरेत् ॥ १७ ॥ मरणं नाभिकामयेत जीवितञ्च ॥ १८ ॥ अतिवादांस्तितिक्षेत ॥ १९ ॥ न कञ्चनावमन्येत ॥ २० ॥ निराशीः स्यात् ॥ २१ ॥ निर्नमस्कारः ॥ २२ ॥

वास्यैकं तक्षतो बाहुं चन्दनेनैकमुक्षतः ।
अकल्याणं न कल्याणं तयोरपि च चिन्तयेत् ॥ २३ ॥

...धारणाध्याननित्यः स्यात् ॥ २४ ॥ ...तां पश्येत् ॥ २५ ॥ शरीरस्याशुचि- ... ॥ २६ ॥ जरया रूपविपर्य्ययम् ॥ २७ ॥ ...आगन्तुकव्याधिभिश्चोपतापम् ॥२८॥ सत्त्वैश्च ॥ २९ ॥ नित्यान्धकारे गर्भे वसतिम् ॥ ३० ॥ मूत्रपुरीषमध्ये च ॥ ३१ ॥ तत्र च शीतोष्णादुःखानुभवनम् ॥ ३२ ॥ जन्मसमये योनिसङ्कटनिर्गमाच्च महादुःखानुभवनम् ॥ ३३ ॥ बाल्ये मोहं गुरुपरवश्यताम् ॥ ३४ ॥ अध्ययनादनेकक्लेशम् ॥ ३५ ॥ यौवने च विषयप्राप्तावमार्गणा तदवाप्तौ विषयसेवनान्नरके पतनम् ॥ ३६ ॥ अप्रियैर्व्वमितं प्रियैश्च विप्रयोगम् ॥ ३७ ॥ नरकेषु च सुमहद्दुःखम् ॥ ३८ ॥ संसारसंसृतौ तिर्य्यग्योनिषु च ॥ ३९ ॥ एवमस्मिन् सततपापिनि संसारे न किञ्चित् सुखम् ॥ ४० ॥ यदपि किञ्चिद्दुःखापन्नया सुखसंज्ञं तदप्यनित्यम् ॥ ४१ ॥ तत्सुखाशक्तावसने वा महद्दुःखम् ॥ ४२ ॥ शरीरञ्चेदं सप्तधातुकं पश्येत् ॥ ४३ ॥ वसारुधिरमांसास्थिमेदोमज्जाशुक्रात्मकम् ॥ ४४ ॥ चर्म्मावनद्धम् ॥ ४५ ॥ दुर्गन्धि च ॥ ४६ ॥ मलायतनम् ॥ ४७ ॥ सुखशतैरपि कृतं विकारि ॥ ४८ ॥ प्रयत्नाद्धृतमपि विनाशि ॥ ४९ ॥ कामक्रोधलोभमोहमदमात्सर्य्यस्थानम् ॥ ५० ॥ पृथिव्यप्तेजोवाय्वाकाशात्मकम् ॥ ५१ ॥ अस्थिशिराधमनिस्नायुयुतम् ॥ ५२ ॥ रजस्वलम् ॥ ५३ ॥ षट्त्वचम् ॥ ५४ ॥ अस्थ्नां त्रिभिः शतैः षष्ट्यधिकैर्धार्य्यमाणम् ॥ ५५ ॥ तेषां विभागः ॥ ५६ ॥ सूक्ष्मैः सह चतुःषष्टिर्दशनाः ॥ ५७ ॥ विंशतिर्नखाः ॥ ५८ ॥ पाणिपादशलाकाश्च ॥ ५९ ॥ षष्टिरङ्गुलीनां पर्व्वाणि ॥ ६० ॥ द्वे पार्ष्ण्योः ॥ ६१ ॥ चतुष्टयं गुल्फेषु ॥ ६२ ॥ चत्वार्य्यरत्न्योः ॥ ६३ ॥ चत्वारि जङ्घयोः ॥ ६४ ॥ द्वे द्वे जानुकपोलयोः ॥ ६५ ॥ द्वे द्वे अक्षतालूषकश्रोणिफलकेषु ॥ ६६ ॥ भगास्थ्येकम् ॥ ६७ ॥ पृष्ठास्थि पञ्चचत्वारिंशद्भागम् ॥ ६८ ॥ पञ्चदशास्थीनि ग्रीवा ॥ ६९ ॥ जत्र्वेकम् ॥ ७० ॥ तथा हनुः ॥ ७१ ॥ तन्मूले च द्वे ॥ ७२ ॥ द्वे ललाटाक्षिगण्डे ॥ ७३ ॥ नासा घनास्थिका ॥ ७४ ॥ अर्व्वुदैः स्थालकैश्च सार्द्धं द्वासप्ततिः पार्श्वकाः ॥ ७५ ॥ उरः सप्तदश ॥ ७६ ॥ द्वौ शङ्खकौ ॥ ७७ ॥

चत्वारि कपालानि शिरसश्चेति ॥ ७८ ॥ शरीरेऽस्मिन् सप्तशिराशतानि ॥ ७९ ॥ नवस्नायुशतानि ॥ ८० ॥ धमनीशते द्वे ॥ ८१ ॥ पञ्चपेशीशतानि ॥ ८२ ॥ क्षुद्रधमनीनामेकोनत्रिंशल्लक्षाणि नवशतानि षट्पञ्चाशच्च ॥ ८३ ॥ त्रयं श्मश्रुकेशकूपानाम् ॥ ८४ ॥ सप्तोत्तरं मर्म्मशतम् ॥ ८५ ॥ सन्धिशते द्वे ॥ ८६ ॥ चतुःपञ्चाशद्रोमकोटयः सप्तषष्टिश्च लक्षाणि ॥ ८७ ॥ नाभिरोजो गुदं शुक्रं शोणितं शङ्खकौ मूर्द्धा कण्ठो हृदयञ्चेति प्राणायतनानि ॥ ८८ ॥ बाहुद्वयं जङ्घाद्वयं मध्यं शीर्षमिति षडङ्गानि ॥ ८९ ॥ वसा वपा अवहननं नाभिः क्लोमा यकृत् प्लीहा क्षुद्रान्त्रं वृक्कौ बस्तिः पुरीषाधानमामाशयो हृदयं स्थूलान्त्रं गुदमुदरं गुदकोष्ठम् ॥ ९० ॥ कनीनिके अक्षिकूटे शष्कुली कर्णौ कर्णपत्रकौ गण्डौ भ्रुवौ शङ्खकौ दन्तवेष्टावोष्ठौ ककुन्दरे वङ्क्षणौ वृषणौ वृक्कौ श्लेष्मसङ्घातकौ स्तनौ उपजिह्वा स्फिचौ बाहू जङ्घे ऊरू पिण्डिके तालूदरं बस्तिशीर्षौ चिबुकं गलशुण्डिके अवटुश्चास्मिन् शरीरके स्थानानि ॥ ९१ ॥ शब्दस्पर्शरूपरसगन्धाश्च विषयाः ॥ ९२ ॥ नासिका लोचने त्वग् जिह्वा श्रोत्रमिति बुद्धीन्द्रियाणि ॥ ९३ ॥ हस्तौ पादौ पायूपस्थं जिह्वेति कर्म्मेन्द्रियाणि ॥ ९४ ॥ मनोबुद्धिरात्मा चाव्यक्तमितीन्द्रियातीताः ॥ ९५ ॥

इदं शरीरं वसुधे क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञमिति तद्विदः ॥ ९६ ॥
क्षेत्रज्ञमेव मां विद्धि सर्व्वक्षेत्रेषु भाविनि ।
क्षेत्रक्षेत्रज्ञविज्ञानं ज्ञेयं नित्यं मुमुक्षुणा ॥ ९७ ॥

इति वैष्णवे धर्म्मशास्त्रे षण्णवतितमोऽध्यायः ॥ ९६ ॥

---

## सप्तनवतितमोऽध्यायः ।

उत्तानोत्तानचरणः सव्ये करे करमितरं न्यस्य तालुस्थाचलजिह्वो दन्तैर्दन्तानसंस्पृशन् स्वं नासिकाग्रं पश्यन् दिशश्चानवलोकयन् विभीः प्रशान्तात्मा चतुर्व्विंशत्या तत्त्वैर्व्यतीतं चिन्तयेत् ॥ १ ॥ नित्यमतीन्द्रियमगुणं शब्दस्पर्शरसरूपगन्धातीतं सर्व्वज्ञमिति स्थूलम् ॥ २ ॥ सर्व्वगमतिसूक्ष्मम् ॥ ३ ॥ सर्व्वतःपाणिपादं सर्व्वतोऽक्षिशिरोमुखं सर्व्वतः सर्व्वेन्द्रियशक्तिम् ॥ ४ ॥ एवं ध्या[illegible] ॥ ५ ॥ ध्यानिरतस्य च संवत्सरेण योगाविर्भावो भवति ॥ ६ ॥ अथ निराकारं लक्ष्यबन्धं कर्त्तुं न शक्नोति तदा पृथिव्यप्तेजोवाय्वाकाशमनोबुद्ध्यात्माव्यक्तपुरुषाणां पूर्वं पूर्वं ध्यात्वा तत्र लब्धलक्ष्यस्तत्तत् परित्यज्य परमपरं ध्यायेत् ॥ ७ ॥ एवं पुरुषध्यानमारभेत ॥ ८ ॥ अत्राप्यसमर्थः स्वहृदयपद्मस्याधोमुखस्य मध्ये दीपवत् पुरुषं ध्यायेत् ॥ ९ ॥ तत्राप्यसमर्थो भगवन्तं वासुदेवं किरीटिनं कुण्डलिनमङ्गदिनं श्रीवत्साङ्कं वनमालाविभूषितोरस्कं सौम्यरूपं चतुर्भुजं शङ्खचक्रगदापद्मधरं चरणगतपृथ्वीं ध्यायेत् ॥ १० ॥ यद्ध्यायति तदाप्नोति ध्यानगुह्यम् ॥ ११ ॥ तस्मात् सर्व्वमेव परं त्यक्त्वा अपरमेव ध्यायेत् ॥ १२ ॥ न च पुरुषं विना किञ्चिदप्यपरमस्ति ॥ १३ ॥ तं प्राप्य मुक्तो भवति ॥ १४ ॥

परमात्मानं सकलं शेते यस्मान्महाप्रभुः ।
तस्मात् पुरुष इत्येवं प्रोच्यते तत्त्वचिन्तकैः ॥ १५
प्राणायामपरात्रेषु योगी नित्यमतन्द्रितः ।
ध्यायेत पुरुषं विष्णुं निर्गुणं पञ्चविंशकम् ॥ १६
तत्त्वात्मानमगम्यञ्च सर्व्वातत्त्वविवर्ज्जितम् ।
असक्तं सर्व्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १७
बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात् तदविज्ञेयं दूरस्थञ्चान्तिके च तत् ॥ १८
अविभक्तञ्च भूतेषु विभक्तमिव च स्थितम् ।
भूतभव्यभवद्रूपं ग्रसिष्णु प्रभविष्णु च ॥ १९
ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्व्वस्य विष्ठितम् ॥ २० ॥
इति क्षेत्रं तथा ज्ञानं ज्ञेयञ्चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ २१ ॥

इति वैष्णवे धर्म्मशास्त्रे सप्तनवतितमोऽध्यायः ॥ ९७ ॥

## अष्टनवतितमोऽध्यायः।

इत्येवमुक्ता वसुमती जानुभ्यां शिरसा च नमस्कृत्योवाच ॥ १ ॥ भगवंस्त्वत्तुलमीयं सनतमेवं चत्वारि महाभूतानि क्षताख्यान्याकाशः प्रकृष्टरूपी वायुश्चक्षुरूपी तेजश्च गदारूप्यमोरुद्रूपि अहमथवेनैव रूपेण भगवत्पादमध्यपरिवर्तिनी भवितुमिच्छामि ॥ २ ॥ इत्येवमुक्तो भगवांस्तांतुवाच ॥ ३ ॥ वसुधापि लब्धकामा तथा चक्रे ॥ ४ ॥ देवदेवञ्च तुष्टाव ॥ ५ ॥ ओं नमस्ते ॥ ६ ॥ देवदेव ॥ ७ ॥ वासुदेव ॥ ८ ॥ आदिदेव ॥ ९ ॥ कामदेव ॥ १० ॥ कामपाल ॥ ११ ॥ महीपाल ॥ १२ ॥ अनादिमध्यनिधन ॥ १३ ॥ प्रजापते ॥ १४ ॥ सुप्रजापते ॥ १५ ॥ महाप्रजापते ॥ १६ ॥ ऊर्जस्पते ॥ १७ ॥ वाचस्पते ॥ १८ ॥ जगत्पते ॥ १९ ॥ दिवस्पते ॥ २० ॥ वनस्पते ॥ २१ ॥ पयस्पते ॥२२॥ पृथिवीपते ॥ २३ ॥ सलिलपते ॥ २४ ॥ दिक्पते ॥ २५ ॥ महत्पते ॥ २६ ॥ मरुत्पते ॥ २७ ॥ लक्ष्मीपते ॥ २८ ॥ ब्रह्मरूप ॥ २९ ॥ ब्राह्मणप्रिय ॥३०॥ सर्वग ॥ ३१ ॥ अचिन्त्य ॥ ३२ ॥ ज्ञानगम्य ॥३३॥ पुरुहूत ॥ ३४ ॥ पुरुष्टुत ॥ ३५ ॥ ब्रह्मण्य ॥ ३६ ॥ ब्रह्मप्रिय ॥ ३७ ॥ ब्रह्मकायिक ॥ ३८ ॥ महाकायिक ॥ ३९ ॥ महाराजिक ॥ ४० ॥ चतुर्महाराजिक ॥ ४१ ॥ भास्वर ॥ ४२ ॥ महाभास्वर ॥ ४३ ॥ सप्त ॥ ४४ ॥ महाभाग ॥ ४५ ॥ स्वर ॥ ४६ ॥ तुषित ॥ ४७ ॥ महातुषित ॥ ४८ ॥ प्रतर्दन ॥ ४९ ॥ परिनिर्म्मित ॥ ५० ॥ अपरिनिर्म्मित ॥ ५१ ॥ वशवर्त्तिन् ॥ ५२ ॥ यज्ञ ॥ ५३ ॥ महायज्ञ ॥ ५४ ॥ यज्ञयोग ॥ ५५ ॥ यज्ञगम्य ॥ ५६ ॥ यज्ञनिधन ॥ ५७ ॥ अजित ॥ ५८ ॥ वैकुण्ठ ॥ ५९ ॥ अपार ॥ ६० ॥ पर ॥ ६१ ॥ पुराण ॥ ६२ ॥ संख्य ॥ ६३ ॥ प्रजाधर ॥६४॥ चित्रशिखण्डधर ॥६५॥ यज्ञभागहर ॥६६॥ पुरोडाशहर ॥६७॥ विश्वम्भर ॥ ६८॥ विश्वधर ॥६९॥ शुचिश्रवः ॥७०॥ अच्युताचर्न ॥ ७१ ॥ घर्मार्चिः ॥ ७२ ॥ खण्डपरशो ॥ ७३ ॥ पद्मनाभ ॥७४॥ पद्मधर ॥७५॥ पद्माधाराधर ॥७६॥ हृषीकेश ॥ ७७ ॥ एकशृङ्ग ॥ ७८ ॥ महावराह ॥ ७९ ॥ दंष्ट्रिन ॥ ८० ॥ अच्युत ॥ ८१ ॥ अनन्त ॥ ८२ ॥ पुरुष ॥ ८३ ॥ महापुरुष ॥ ८४ ॥ कपिल ॥ ८५ ॥ सांख्याचार्य ॥ ८६ ॥ विश्वक्सेन ॥ ८७ ॥ धर्म्म ॥ ८८ ॥ धर्म्मद ॥ ८९ ॥ धर्म्माङ्ग ॥ ९० ॥ धर्म्मवसुप्रद ॥ ९१ ॥ वरप्रद ॥ ९२ ॥ विष्णो ॥९३॥ जिष्णो ॥ ९४ ॥ सहिष्णो ॥ ९५ ॥ कृष्ण ॥ ९६ ॥ पुण्डरीकाक्ष ॥ ९७ ॥ नारायण ॥ ९८ ॥ परायण ॥ ९९ ॥ जगत्परायण ॥ १०० ॥ नमो नम इति ॥१०१॥

स्तुत्वा त्वेवं प्रसन्नेन मनसा पृथिवी तदा।
उवाच सम्मुखं देवं लब्धकामा वसुन्धरा ॥ १०२ ॥

इति वैष्णवे धर्म्मशास्त्रेऽष्टनवतितमोऽध्यायः ॥ ९८ ॥

---

## नवनवतितमोऽध्यायः।

दृष्ट्वा श्रियं देवदेवस्य विष्णोः
संवाहितपादां तपसा ज्वलन्तीम्।
सुतप्तजाम्बूनदचारुवर्णां
पप्रच्छ देवीं वसुधा प्रहृष्टा ॥ १ ॥
उन्निद्रकोकनदचारुकरे वरेस्त्रे
उन्निद्रकोकनदनाभिसंवाहितपादे।
उन्निद्रकोकनदसद्मसदाश्रितेति
उन्निद्रकोकनदमध्यसमानवर्ण्णे ॥ २ ॥
नीलाञ्जनेव तपनीयवर्णे
मुक्ताम्बरे रत्नविभूषिताङ्गि।
चन्द्राननै सूर्य्यसमानभासे
महाप्रभावे जगतः प्रधाने ॥ ३ ॥
त्वमेव निद्रा जगतः प्रधाना
लक्ष्मीर्धृतिः श्रीर्विरतिर्जया च।
कान्तिः प्रभा कीर्त्तिरथो विभूतिः
सरस्वती वाक् च पावनी च ॥ ४ ॥
स्वधा तितिक्षा वसुधा प्रतिष्ठा
स्थितिः सदीप्ता च तथा सुनीतिः।

स्वार्त्तिर्विशाला च तथानसूया
स्वाहा च मेधा च तथैव बुद्धिः ॥ ५ ॥
आक्रम्य सर्व्वांस्तु यथा त्रिलोकीं
तिष्ठत्ययं देववरोऽसितापि ।
तथा स्थिता त्वं वरदेत्तथापि
पृच्छाम्यहं ते वसतिं विभूत्याः ॥ ६ ॥
इत्थं वसुत्ता वसुधां बभाषे
लक्ष्मीस्तदा देववराग्रतःस्था ।
सदा स्थिताहं मधुसूदनस्य
देवस्य पार्श्वे तपनीयवर्णा ॥ ७ ॥
अस्याज्ञया यं मनसा स्मरामि
श्रिया युतं तं प्रवदन्ति सन्तः ।
संस्मारणं वाप्यथ तत्र चाहं
स्थिता सदा तच्छृणु लोकधात्रि ॥ ८ ॥
वसाम्यथार्के च निशाकरे च
ताराङ्गणाढ्ये गगने विमेघे ।
मेघे तथातत्त्वपयोधरे च
शक्रायुधाढ्ये च तड़ित्प्रकाशे ॥ ९ ॥
तथा सुवर्णे विमले च रूप्ये
रत्नेषु वस्त्रेष्वमलेषु भूमे ।
प्रासादमालासु च पाण्डुरासु
देवालयेषु ध्वजभूषितेषु ॥ १० ॥
सद्यः कृते चाप्यथ गोमये च
मत्ते गजेन्द्रे तुरगे प्रहृष्टे ।
वृषे तथा दर्पसमन्विते च
विप्रे तथैवाध्ययनप्रपन्ने ॥ ११ ॥
सिंहासने चामलके च बिल्वे
छत्रे च शङ्खे च तथैव पद्मे ।
दीप्ते हुताशे विमले च खड्गे
आदर्शबिम्बे च तथा स्थिताहम् ॥ १२ ॥
पूर्णोदकुम्भेषु सचामरेषु
सतालवृन्तेषु विभूषितेषु ।
भृङ्गारपात्रेषु मनोहरेषु
स्वदि स्थिताहञ्च मनोज्ञतायाम् ॥ १३ ॥
क्षीरे तथा सर्पिषि शाद्वले च
क्षौद्रे तथा दधि पुरन्ध्रिगात्रे ।
देहे कुमार्य्याश्च तथा सुराणां
तपस्विनां यज्ञकृताञ्च देहे ॥ १४ ॥
शूरे च संग्रामविनिर्गते च
स्थितौ मृते स्वर्गसदः प्रयाते ।
वेदध्वनौ वाप्यथ शङ्खशब्दे
स्वाहास्वधाख्यामथ वाद्यशब्दे ॥ १५ ॥
राजाभिषेके च तथा विवाहे
यज्ञे वरे स्नातशिरस्यथापि ।
पुष्पेषु शुक्लेषु च पर्व्वतेषु
फलेषु रम्येषु सरिद्वरासु ॥ १६ ॥
सरःसु पूर्णेषु तथा जलेषु
सशाद्वलायां भुवि पद्मखण्डे ।
वने च वत्से च शिशौ प्रहृष्टे
साधौ नरे धर्म्मपरायणे च ॥ १७ ॥
आचारसंविन्यथ शास्त्रनित्ये
विनीतवेशे च तथा सुवेशे ।
शुभाह्नदान्ते मलवर्ज्जिते च
स्वकाशने चातिथिपूजके च ॥ १८ ॥
स्वदारतुष्टे निरते च धर्म्मे
धर्म्मोत्कटे चात्यशनादिरक्ते ।
सदा सपुष्पे च सुगन्धिगात्रे
सुगन्धलिप्ते च विभूषिते च ॥ १९ ॥
सत्यस्थिते भूतहिते निविष्टे
क्षमान्विते क्रोधविवर्ज्जिते च ।
स्वकार्य्यदक्षे परकार्य्यदक्षे
कल्याणचित्ते च सदा विनीते ॥ २० ॥
नारीषु नित्यं सुविभूषितासु
पतिव्रतासु प्रियवादिनीषु ।
असुक्तहस्तासु सुतान्वितासु
सुगुप्तभाण्डासु बलिप्रियासु ॥ २१ ॥
सम्मृष्टवेश्मासु जितेन्द्रियासु
कलिव्यपेतासु प्रथितस्थितासु ।

धर्म्मर्षयस्सु दयान्वितासु
स्थिता सदाहं मधुसूदने तु ॥ २२ ॥

इति वैष्णवे धर्म्मशास्त्रे नवनवतितमोऽध्यायः ॥

---

## शततमोऽध्यायः।

धर्म्मशास्त्रमिदं श्रेष्ठं स्वयं देवेन भाषितम्।
ये द्विजा धारयिष्यन्ति तेषां स्वर्गे गतिः परा ॥ १ ॥
इदं पवित्रं मङ्गल्यं स्वर्ग्यमायुष्यमेव च।
ज्ञानश्चैव यशस्यञ्च धनसौभाग्यवर्द्धनम् ॥ २ ॥
अध्येतव्यं धारणीयं श्राव्यं श्रोतव्यमेव च।
श्राद्धे तु श्रावणीयञ्च भूतिकामैर्नरैः सदा।
इदं रहस्यं परमं कथितं वसुधे तव ॥ ३ ॥
मया प्रसन्नेन जगद्धितार्थं
सौभाग्यमेतत् परमं रहस्यम्।
दुःस्वप्ननाशं बहुपुण्ययुक्तं
शिवालयं शाश्वतधर्म्मशास्त्रम् ॥ ४ ॥

इति वैष्णवे धर्म्मशास्त्रे शततमोऽध्यायः ॥ १००

---

समाप्तञ्चेदं विष्णुपुराणम्।

—००—

# विष्णुसंहिता ।

## प्रथम अध्याय ।

प्रलयरात्रि बीतनेपर भगवान् पद्मयोनि ब्रह्माजीको जगा हुआ देख विष्णु भगवान् सर्व्व भूतोंकी सृष्टि करनेके अभिलाषी हुए। पृथिवीको जलमग्ना जानकर पूर्व्व कल्पोंके समान इसबार भी उन्होंने जलक्रीड़ापर, शुभ वराह रूप धारणकर उसका उद्धार किया। उस समय ऋक्, यजु, साम और अथर्व्व यह चारो वेद उनके चार चरण; यूप—दंष्ट्रा अर्थात् बाहर निकला हुआ विशाल दन्त; यज्ञ सकल—दन्त समूह, चिति-मुखमण्डल; अग्नि-जिह्वा; दर्भ-रोम; वेदार्थ-मस्तक; रात दिन-दोनो नेत्र; वेद अर्थात् द्विगुणित दर्भ मुष्टि-कर्णद्वय; दूसरी दर्भ मुष्टिका अग्रभाग-कर्णभूषण; घृतधारा-नासिकावंश; स्रुवा नामक यज्ञीय पात्र विशेष—मुखका अग्रभाग; गान-घर्घर शब्द; प्रायश्चित्त-विशाल निखाका विवर अर्थात् नथुना; यज्ञीय पशु-जानु; उद्गाता-अंतड़ी; होम-लिङ्ग; बीज और औषधि-वृहत् अण्डकोष; प्राग्वंशान्तर्गत वेदि-अन्तरात्मा; सोमरस-रक्त; महावेदि स्कन्ध; हवीहि यज्ञ ही जानेवाली वस्तु-शरीरका गन्ध; हव्यकव्यादि-वेग; प्राग्वंश अर्थात् यज्ञका एक खास घर-शरीर; दक्षिणा-चित्त; उपाकर्म्म-ओष्ठाधर; प्रवर्ग्यावर्त्त अर्थात् धर्म्मजल प्रवाह-भूषण; नानाविध छन्द-गमन पथ और गोपनीय उपनिषद् सकल-बैठनेका स्थान हुआ था। वे महातेज, दिव्य, साक्षात् धर्म्म और सत्य-स्वरूप, सुश्री, गमनागमनमें सबसे पूजित, महाकाय, मन्त्ररूप स्निग्ध अर्थात् चतड़ोंसे वैलक्षण्य प्राप्त, दीप्तिशाली, नानाविध दीक्षा-समन्वित, समाधि और महामन्त्र स्वरूपी और महत्त्वसम्पन्न हैं। एकमात्र छाया पत्नि स्वरूप उनके साथ थी। मणिमय पर्व्वतशिखरके समान आदिदेव महायोगी भगवान्ने प्रकट होकर, उस दिग्-दिगन्तव्यापी एकीभूत महासमुद्रजलमें डूबी हुई गिरि-वन-राजि-समन्वित ससागरा पृथिवीको स्वयम् उस जलमें प्रवेशकर दंष्ट्राग्र द्वारा उठाकर फिर इस जगत्की सृष्टि की थी। इस प्रकार पूर्व्वकालमें त्रिभुवनहिताभिलाषी भगवान् विष्णुने यह वराहरूप धारणकर पातालमें गई

हुई समस्त पृथिवीका उद्धारकर उसको फिर उसीके अचल स्थानपर स्थापना की और समुद्रका जल समुद्रमें, नदीका जल नदीमें, सरोवरका जल सरोवरमें इसी प्रकार समस्त पृथिवीप्रावी उस जलको निज निज स्थानमें विभक्तकर रख दिया। फिर सप्त पाताल, सप्तलोक, द्वीप और समुद्रके विविध स्थान, उन उन स्थानोंके पालक, लोकपाल, नदी, पर्व्वत, वनस्पति, धर्म्मवेत्ता-सप्तर्षि, साङ्गवेद, सुर, असुर, पिशाच, सर्प, यक्ष, राक्षस, मनुष्य, पशु पक्षी, मृगादि नानाविध प्राणी, चतुर्विध अर्थात् जरायुज, अण्डज, स्वेदज, उद्भिज यह चार प्रकारके प्राणी, मेघ, इन्द्रधनु, विद्युत् प्रभृति अन्यान्य विविध पदार्थोंकी सृष्टि की। इस प्रकार वराह रूपधारी भगवान्‌ने स्थावर जङ्गममय जगत्‌की सृष्टि कर जिसे कोई नहीं जानता ऐसे स्थानमें चले गये। देवदेव जनार्दनके अविदित स्थानमें चले जानेपर पृथिवी सोचने लगी "अब मेरी अवस्थितिका क्या उपाय होगा? चलूं कश्यपजीके पास चलूं, वह मुझे अवश्य ही कोई उपाय बता देंगे।" यह निश्चयकर पृथिवी देवीने रमणीरूप धारण किया और भगवान् कश्यपजीके पास चली। कश्यपजीने दूरसे उसे आती हुई देखा। उन्होंने देखा, कि उसके नेत्र नीलकमलके समान मनोहर; अलकराजि, भ्रमर समूहवत् कृष्णवर्ण; मुख, शरच्चन्द्रवत्; वर्ण शुक्ल; ओंठ, बन्धुजीव पुष्पके समान रक्तवर्ण; स्वभाव निर्म्मल; भौंह अत्यन्त सुन्दर तथा झुकी हुई; छोटे छोटे दांत; सुन्दर नासिका; कम्बुग्रीवा; परस्पर सटे हुए उच्च विशाल जघन स्थल, अत्यन्त स्थूल, स्तनद्वय ऐरावत कुम्भके समान बड़े, सुवर्णप्रभ, बराबर और कठोर; बाहुद्वय मृणालके समान कोमल; कर युगल नवपल्लवके समान; दोनो उरु-सुवर्ण स्तम्भवत्; जानुद्वय गूढ़ और संश्लिष्ट; जङ्घाद्वय-रोमहीन तथा सुवृत्त; दोनों चरण अतिशय मनोरम; जघनस्थल-दृढ़; मध्यभाग सिंह-शिशु मध्यवत् क्षीण; नख-प्रभायुक्त और ताम्रवर्ण; उस सर्व्व मनोहर रूपका क्या वर्णन करें। उसने मलीन शुक्ल वस्त्र धारण किया था, शरीरपर उत्तमोत्तम रत्नालङ्कार थे; उसके निरन्तर दृष्टिपात करनेसे दिग्मण्डल मानो नीलकमलोंसे परिपूर्ण हो रहा था। देहप्रभासे दिग्दिगान्तरव्यापी अन्धकार पलायन कर रहा था और प्रत्येक पदक्षेपके साथ साथ भट्टीपर राशि राशि कमल प्रस्फुटित हो रहे थे। धीरे धीरे वह रूप—यौवन-सम्पन्ना रमणीरूपा पृथिवी विनयके साथ कश्यपके सामने उपस्थित हुई। कश्यपने उसे आई हुई देखकर उसका आदर किया और कहा—हे वसुन्धरे! मैंने तुम्हारा मनोगत अभिप्राय जान

लिया है। हे देवी ! तुम जनार्द्दनके पास जाओ, वह तुम्हारी अवस्थितिका उपाय तुम्हें बता देंगे। हे शुभानने ! मैंने ध्यानसे जाना है, कि इस समय वह क्षीरोद समुद्रमें हैं। उन्हींके प्रसादसे ध्यानसे जाननेकी क्षमता मुझे प्राप्त हुई है। वह सुन "जो आज्ञा" कह तथा कश्यप ऋषिको प्रणामकर पृथिवी विष्णु दर्शनके लिये क्षीरोद समुद्रकी ओर चली। क्रमसे निर्म्मल चन्द्रिका-विधौत, वायुवेग समुत्थित उत्ताल तरङ्ग-निकर सङ्कुल, शत हिमालय-परिमित अपर भूमण्डलवत् प्रतीयमान, सुधासागर देख पड़ा। वह समुद्र मानो चञ्चल तरङ्ग रूपी हाथोंको फैलाकर उसीको बुला रहा था और इन्हीं हाथोंके स्पर्शसे स्वीय तनय चन्द्रको मानो निरन्तर धवलता दे रहा था। उसको देखने हीसे मालूम होता था, कि सर्व्वभूतभावन वासुदेवने इसके अभ्यन्तरमें रहकर कलुष-राशि धो डाली है इसीसे उसका शरीर इतना बड़ा और शुभ्र है। इस समुद्रके पास पाण्डुर-वर्ण आकाशचारी भी नहीं जा सकते थे। इसकी स्थिति पातालमें है। उसके भीतरके इन्द्रनील मणि और कपिश मणिप्रभासे गगनमण्डल उसके भीतर होनेकी भ्रान्ति होती थी। अनन्त नागकी विशाल केंचुलीके समान उस प्रसिद्ध क्षीरोद समुद्रका दर्शनकर पृथिवीने तन्मध्यस्थित अपरिमेय परिच्छद शोभित विष्णु-गृह देखा और उस गृहमें शेषपर्य्यङ्क-शायी विष्णु भगवान्‌को भी देखा। अनन्त-नागको फणामण्डलस्थित रत्नराशिकी उज्ज्वलतर ज्योतिके कारण जिनका मुख-पद्म दर्शन कठिन हो रहा था, जिनकी प्रभा शत चन्द्रमाके समान मनोहर और अयुत सूर्य्यके समान शुभ्र थी ; जो पीत वस्त्र पहिरे थे ; जो सर्व्व रत्नालङ्कारसे अलङ्कृत थे ; सूर्य्यप्रभ अर्थात् सुवर्णमय मुकुट और कुण्डलसे जिनकी शोभा अधिकाधिक बढ़ रही थी ; स्वयम् लक्ष्मी निज मङ्गल-मय चारो हाथोंसे जिनकी चरणसेवा कर रही थीं; चक्र प्रभृति यावतीय अस्त्र मूर्त्ति-मान् होकर जिनकी सेवाके लिये हाथ जोड़े खड़े थे, उन्हीं पद्मपलाशलोचन मधुसूद-नको देखकर पृथिवीने प्रणाम किया और जानुद्वारा मृत्तिका स्पर्श कर निवेदन करने लगी,—"हे देव ! हे विष्णु ! मैं रसातलमें चली गई थी, पर सकल लोकको हितका-मनासे तुम्हींने मुझे निकालकर स्वस्थानमें रखा है। हे देवेश ! अब मेरी अवस्थि-तिका क्या उपाय होगा ?" देवी वसुम-तिके यह कहनेपर मधुसूदन कहने लगे, "वर्णाश्रम आचार पालनमें तत्पर शास्त्रनिष्ठ लोग तुम्हारी अवस्थितिका उपाय करेंगे ; उन्हींके ऊपर तुम्हारा भार है।" भगवान् विष्णुके यह कहनेपर वसुमतीने उन्हें

कहा,—"वर्ण और आश्रमकी सकल सनातन धर्म कहो। तुमसे यह सुननेकी मुझे बहुत इच्छा है, तुम्ही हमारी एक मात्र गति हो। हे दैत्यबलसूदन! देवाधिपति देव! तुम्हें नमस्कार। हे नारायण! हे जगन्नाथ! हे शङ्खचक्रगदाधर! हे पद्मनाभ! हे हृषिकेश! हे महाबल पराक्रम! हे अतीन्द्रिय अर्थात् इन्द्रियके द्वारा अज्ञेय! हे अपार! हे देव! हे सर्व्व धनुर्धारिन! हे वराह! हे भीम! हे गोविन्द! हे पुराण! हे पुरुषोत्तम! हे हिरण्यकेश! हे त्रिशाक्ष अर्थात् सर्व्वद्रष्टा! हे यज्ञरूप! हे निरञ्जन! हे स्थूलादि देव! हे वेदज्ञ! हे लोकनाथ! हे अगाध समुद्रशायी! हे मन्त्र! हे मन्त्रगत अर्थात् होता! हे अचिन्त्य! हे वेद वेदाङ्ग रूपिन्! हे समस्त जगत् सृष्टिस्थितिकारिन्! धर्माधर्मज्ञ! हे धर्माङ्ग! हे धर्म सम्भव! हे वरद! हे विश्वक्सेन! हे अविनाशिन्! हे आकाशरूप! हे मधुकैटभसूदन! हे बृहतां बृहण अर्थात् आकाशादि वर्द्धक! अथवा आकाशादिसे भी वृहत् परिमाण! हे ज्ञेय! हे सर्व्व! हे सर्व्व भयद! हे वरेण्य! हे अनघ! हे जीमूत! हे मेघश्याम! हे जीवानन्दकर! हे अव्यय! हे जगन्निर्माणकारिन्! हे आप्यायन अर्थात् जगदानन्द! हे चैतन्यामय! हे निष्काय! हे शतशीर्ष अर्थात् भूप्रभृति सप्तलोकस्वरूप! हे यज्ञेश्वर! हे पुराण पुरुषोत्तम! हे ध्रुव अर्थात् नित्य! हे अक्षर! हे सुसूक्ष्म अर्थात् परिमाणुक्रियादि हेतु! हे भक्तवत्सल! हे अनन्य! तुम्हीं सब देवताओंकी गति हो, तुम्हीं समस्त ब्रह्मवादियोंकी गति हो और हे पुरुषोत्तम तुम्हीं तत्त्वज्ञानियोंकी गति हो, हे जगन्नाथ! मैं तुम्हारे शरण आई हूं। तुम ही ध्रुव, वाचस्पति, प्रभु, सुब्रह्मण्य अर्थात् वेद, ब्राह्मणोंके अद्वितीय हितकारी, अजेय, वसुरेण, वसुप्रद और महायोगबलयुक्त हो, सर्व्वव्यापी आकाश भी तुम्हारे जठरमें छिप जाता है; तुमही तेजोरूपमें चन्द्र सूर्य्यादिमें विराज करते हो। तुमही वासुदेव, महात्मा पुण्डरीकाक्ष, अच्युत और सुरासुर गुरु हो। तुम देव हो, तुम सर्व्वव्यापी हो, तुम सर्व्व भूतके एकमात्र अधीश्वर हो, तुम ही विराट् मूर्त्ति, चतुर्भुज और जगत्कारणके अर्थात् पृथिव्यादि पञ्च महाभूतोंके सृष्टिकर्त्ता हो; हे प्रभो! मुझे आश्रमाचार-रहस्य और सङ्ग्रह चतुर्वर्णोंके समस्त धर्म कहो।" इस प्रकार कहे जानेपर देवादिदेव विष्णुने पुनः पृथिवीसे कहा:—"हे पृथिवी देवि! जो सब साधुगण तुम्हारा रक्षण करेंगे उन लोगोंके एकमात्र अवलम्बन आश्रमाचार रहस्य और संग्रह सहित चतुर्व्वर्णोंके समस्त सनातन धर्म सुनो। हे वामोरु! इस

